GAṄGĀNĀTHAJHĀ-GRANTHAMĀLĀ
[ Vol. 11 ]

# VAIYĀKARAṆABHŪṢAṆASĀRA

OF

KAUṆḌABHAṬṬA

With 'SĀVITRĪ' Hindi Commentary

**EDITED BY**

DR. ĀDYĀPRASĀDA MIŚRA

**Reader in Vyākaraṇa Deptt.**

**Sampurnanand Sanskrit University**

**Varanasi**



VARANASI
1988

**Research Publication Supervisor :—**
**Director, Research Institute,**
**Sampurnanand Sanskrit University**
**Varanasi.**

●

**Published by :—**
**Dr. Harish Chandra Mani Tripathi**
**Publication Officer,**
**Sampurnanand Sanskrit University**
**Varanasi-221 002.**

●

**Available at—**
**Sales Department,**
**Sampurnanand Sanskrit University**
**Varanasi-221 002.**

●

**First Edition—1100 Copies**
**Price Rs 70.00**

●

**Printed by—**
**Ghan Shyam Upadhyaya**
**Manager,**
**Sampurnanand Sanskrit University Press**
**Varanasi.**

गङ्गानाथझा-ग्रन्थमाला
[ ११ ]

कौण्डभट्टविरचितो

# वैयाकरणभूषणसारः

'सावित्री'-हिन्दी-व्याख्योपेतः

व्याख्याकारः सम्पादकश्च

**डॉ० आद्याप्रसादमिश्रः**

उपाचार्यः,
व्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



वाराणस्याम्

२०४५ तमे वैक्रमाब्दे १९१० तमे शकाब्दे १९८८ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः,
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

●

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२

●

प्राप्तिस्थानम् —
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२

●

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्,—७०.०० रूप्यकाणि

●

मुद्रकः —
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी ।

# शिवसङ्कल्पः

प्रथन्ते लोके भाषाः परःसहस्राः। प्रथन्तेतमां च तत्तद्भाषाणां प्रयोक्तारस्तत्तद्देशाभिजना जनाः पारेपरार्धम्। परमिदं महच्चित्रं यदमूषु सर्वलोकसिद्धासु भाषासु सर्वास्वप्यविद्यमानं किमपि लोकोत्तरं तेजः प्रतितिष्ठति संस्कृतभाषायाम् भारतभूमेः सर्वस्वभूतायाम्। जायन्ते, वर्धन्ते, अपक्षीयन्ते, लुप्यन्ते, म्रियन्ते च सर्वा अन्या भाषाः विश्वस्य। परं सकृज्जातं संस्कृतं नापक्षीयते, न विकुरुते, न लुप्यते, न म्रियते। सैषा तिष्ठति स्थास्यति च लोके शाश्वतीः समाः, अविकृता, अक्षीणा, अलुप्ता, अमरा च। नैषा नियम्यते समस्तभाषान्तरनियामकैर्नियमैः। अतएवेयममरा दैवी च निगद्यते। अतएवेयं विश्वभाषासु मुकुटायते।

यथैव मुकुटायते संस्कृतं विश्वभाषासु तथैव मुकुटायते संस्कृतव्याकरणमपि विश्वभाषाव्याकरणेषु। नास्ति लोके भाषाव्याकरणमन्यत् येन बद्धा तिष्ठति कापि भाषा सहस्रद्वयाधिकानि वर्षाणि मन्त्रस्तम्भितेव। तदिदं संकल्पबलं भगवतः पाणिनेः, तपोबलं भगवतः पतञ्जलेश्च।

यद्यपि पाणिनिसूत्राणामष्टाध्यायी शब्दसाधुत्वसाधनमात्रप्रयोजना प्रतिभायादापाततः, तथापि संस्कृतव्याकरणं न पर्यवस्यति शब्दप्रक्रियामात्रव्याकरणेन। अस्त्येव बीजमस्मिन्नेव पाणिनिसूत्रग्रन्थे शाब्दिकदर्शनस्यापि, यत् परस्तादङ्कुरितं, पल्लवितं, पुष्पितं, फलितञ्च महाभाष्यवाक्यपदीयादिषु। अत एवार्वाचीनशाब्दिकमूर्धन्यैर्भट्टोजिदीक्षितैः शब्दसाधुत्वप्रक्रियार्थं निर्मितया सिद्धान्तकौमुद्या तद्व्याख्यया मनोरमया चापरितुष्यद्भिः शाब्दिकदर्शनरहस्यानां व्याचिकीर्षया शब्दकौस्तुभोऽपि प्राणायि। तानीमानि व्याकरणदर्शनरहस्यानि महाभाष्यरूपादाकरादेव संचितानीत्येतदपि स्पष्टमभ्यधायि तैरनन्तरप्रणीते वेदान्तग्रन्थे तत्त्वकौस्तुभाख्ये। तत्रेत्थं प्रतिजज्ञिरे दीक्षितेन्द्राः—

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
शाङ्करादपि भाष्याब्धेस्तत्त्वकौस्तुभमुद्धरे॥

इदमपि विभावनीयमत्र सुधीभिर्यदस्यैव पद्यस्य स्वपितृव्यप्रणीतस्य पूर्वार्धः प्रस्तुतग्रन्थलेखकैः कौण्डभट्टैरपि यथाक्षरच्छायं समावेशितः इह ग्रन्थारम्भे। उत्तरार्धेन च प्रतिजानते कौण्डभट्टा यत् ते भट्टोजिदीक्षितोपज्ञमेनं शब्दकौस्तुभमवलम्ब्यैव वैयाकरणभूषणसाराख्यमिमं ग्रन्थं प्राणैषिषुरिति, तत्रत्यान् एव अर्थानिह सञ्चिक्षिपुरिति च।

इदमत्र भूषणसारस्थं प्रतिज्ञापद्यम्—

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते॥

प्रसङ्गादिदमपि विभावयन्तु सहृदया भट्टोजिदीक्षितप्रणीतयोः सिद्धान्तकौमुदी-शब्दकौस्तुभयोः ग्रन्थयोः 'कौमुदी' शिरस्क-'कौस्तुभ' शिरस्कनामकरणभेदस्य परमं रहस्यम् । तथा हि—एकस्य ग्रन्थस्य कौमुदीति, अपरस्य कौस्तुभ इति नामभेदकल्पने केनापि विनिगमकेन अवश्यं भाव्यमिति तावन्निश्चप्रचम् । तत्र शब्दार्थमर्मज्ञा भट्टोजि-दीक्षिताः शब्दप्रक्रियाविवरणपरस्य ग्रन्थस्य सर्वजनसेव्यत्वं ख्यापयितुं तं 'कौमुदी'-संज्ञया, शब्दार्थतत्त्वरहस्यविवेचनात्मकदार्शनिकग्रन्थरत्नस्य महार्घत्वं विशिष्टशिष्ट-जनमात्रसेव्यत्वं च द्योतयितुं तं कौस्तुभसंज्ञया च समयूयुजन्निति प्रतिभाति । यथा हि कौमुदी आपण्डितमाहालिकं सर्वलोकसुलभा, सर्वोपभोगक्षमा, सर्वजनाह्लादिनी च भवति, न तथा श्रीमन्नारायणवक्षःस्थलशोभमानं कौस्तुभरत्नमिति नायं तिरोहितः कौमुदीकौस्तुभनिसर्गभेदो वागर्थविदां सहृदयपण्डितानाम् । ग्रन्थयोरनयोरपि ईदृश एव कोऽप्यधिकारिभेदो दीक्षितविवक्षितः स्यादित्यनुमानं युक्तरूपमुत्पश्यामः ।

आस्तामिदं प्रसक्तानुप्रसक्तानुधावनम् । अयं तावन्निर्गलितार्थ इहत्यस्यास्मत्पूर्व-प्रघट्टकस्य । कौण्डभट्टप्रणीतो वैयाकरणभूषणसाराभिधो ग्रन्थोऽयम् आ पतञ्जलेः आ च भट्टोजिदीक्षितादविच्छिन्नधारां वहन्तीं व्याकरणदर्शनसिद्धान्तपरम्परां यथा-यथमात्मसात्करोतीति, अत एव विशुद्धसंप्रदायानुगततया नितरां प्रामाणिक इति च । सिद्धे चैवमस्य विद्वज्जनमहनीयत्वे, इदं तावन्नितरां स्थाने यदसौ पारम्पर्यक्रमागत-व्याकरणदर्शनसिद्धान्तसंग्राहको ग्रन्थतल्लजो बहुभिः शाब्दिकतल्लजैः ग्रन्थार्थगाम्भीर्य-समुद्घाटकैः स्वोपज्ञैः प्रौढैर्व्याख्यानैर्विभूषित इति ।

इदमत्रावधेयम् । कौण्डभट्टेनास्मिन् ग्रन्थे प्राचीनाचार्यप्रोक्ता एव शाब्दिक-सिद्धान्ता यथातथं प्रतिपादितां, न तु तत्र नूतनं किमप्याविष्कारि । एवं स्थितेऽपि वैया-करणभूषणसारस्यायं महानुत्कर्षो यदस्मिन् कौण्डभट्टेन महाभाष्यवाक्यपदीयप्रभृतिषु मूलग्रन्थेषु तट्टीकासु चोन्मीलितानां शाब्दिकदर्शनसिद्धान्तानां नव्यन्यायशास्त्रसिद्धया शैल्या पुरस्कृत्य नवीनीकरणं नाम । नव्यन्यायशैल्या हि तथा समाक्रान्तं समग्रं भारतीयं दर्शनं यथा तां विना कस्यापि दर्शनस्य वादकथाप्रस्तावेष्ववतरणमेव न सम-भाव्यत ततः परम् । अत एव वेदान्तमीमांसादिदर्शनेष्वपि तदानीन्तनैर्महात्मभिः नव्य-न्यायपद्धत्युपरक्ताः प्रौढप्रौढा उद्ग्रन्थाः प्राणायिषत भूयांसः । तत्र व्याकरणदर्शनस्येदृशीं तदानीन्तनीमपेक्षामपूरयत् कौण्डभट्टो वैयाकरणभूषणेन यथार्थाक्षरेण । यदीदृशं नव्य-न्यायशैल्युपबृंहितं वाङ्ग्रन्थं नारचयिष्यत् कौण्डभट्टस्तदा, तर्हि व्याकरणदर्शनं पृष्ठतः कृतमभविष्यद् वादप्रस्थानपङ्क्तिषु । तदेतन्महतो महत् प्रयोजनं संसाध्य, तेन च वादप्रस्थानेषु व्याकरणदर्शनमपि दर्शनान्तरैः सह प्रष्ठे प्रतिष्ठाप्य, मन्महे महदुपकृतं कौण्डभट्टेन व्याकरणस्य ।

कामभिदं सर्वं प्रकृतस्य वैयाकरणभूषणसारस्य नूनं भूषणायते। तथापि नेदं विस्मरणीयं यत् परिवर्तिनि कालचक्रे, अधरोत्तरीभूते त्रिवर्गसारे, पाश्चात्येन अर्थकामपरेण जीवनयात्राक्रमेण समाक्रान्ते प्रत्ने भारतवर्षे, खिलीभूते पण्डितमण्डलेष्वपि श्रुतव्यसनसङ्कल्पे, वाणिज्यायमाने विद्याध्ययनाध्यापनक्रमे, नियोगसाधनत्वेन उपाधिलाभमात्रचक्षुष्कैः छात्रनेतृभिः भयावहां विकृतिमुपनीतेषु परीक्षाव्यापारेषु, महाभारतीयद्यूतसभाभवने भीष्मद्रोणादिवन्मूकीभूतेषु परीक्षाभवने भीतभीतेषु निरीक्षकाध्यापकेषु, समूललोपं विलोपिते प्राचीने शास्त्राभ्यासक्रमे, गतप्रायः कालः प्रौढानां शास्त्रग्रन्थानां प्रौढतरव्याख्यानप्रणयनेन तन्निहित-पद-पदावयव-वाक्यादिगाम्भीर्यसमुद्घाटनस्य। अद्यत्वे तु हन्त शास्त्राधीतिनोऽपि कामयन्ते लघुतमेन प्रयत्नेन गुरुतमं फलमासादयितुम्। इदमेव कालदोषजनितं वैपरीत्यं मनसि निधायाह स्म कश्चित् प्राचीनपाण्डित्यपरम्परासंवर्धितः पण्डितावतंसः स्थूलार्थमात्रपरितुष्टान् गुरुकुलक्लेशादुद्विजमानानध्येतॄनन्तरेण—

अन्तःपातमकृत्वैव सकृद् ग्रन्थान्तरस्थितम्।
आपाततो जिघृक्षन्ति केचिदायासभीरवः॥ इति।

किञ्चान्यत्। आधुनिके युगे सन्ति भूयांसो भाषाचिन्तका भारतीया वैदेशिकाश्च, ये संस्कृतभाषानभिज्ञाः सन्तोऽपि संस्कृतभाषानिबद्धानां प्रौढतरशास्त्रग्रन्थानां सिद्धान्तसारं यथायथं जिज्ञासन्ते। ईदृशा भाषावैज्ञानिकाः समीहन्ते संस्कृतनिबद्धानां शब्दतत्त्वविषयकाणां प्रकृतवैयाकरणभूषणसारसदृशानां दार्शनिकग्रन्थानां सारं वेत्तुम् आङ्ग्लहिन्द्यादिभाषान्तरानुवादमुखेन।

किञ्चान्यत्। सांप्रतं परीक्षोत्तितीर्षामात्रबुद्ध्या व्याकरणशास्त्रमधीयानेषु छात्रेष्वपि सन्ति नैके छात्रा ये ग्रन्थार्थं बोद्धुमपेक्षन्ते साहाय्यं भाषान्तरानुवादानाम्।

ईदृशान् सर्वविधान् पाठकानुपकर्तुमस्मद्विश्वविद्यालयस्य व्याकरणविभागे प्रागुपाचार्यपदप्रतिष्ठाः संप्रत्याचार्यपदे प्रोन्नताश्च डॉ० आद्याप्रसादमिश्राः प्रकृतग्रन्थस्य सरलसरलां मन्दाधिकारिणामपि सुखबोध्यां हिन्दीव्याख्यां प्राणैषिषुः। एतद्व्याख्यासमलङ्कृतम् अस्मद्विश्वविद्यालयेनैव प्रकाश्यमानं ग्रन्थमेनं पूर्वोदाहृतानां समेषां पाठकवर्गाणां करयोः प्रस्तुवतामस्माकं जायते प्रमोदो महान्। श्रद्दध्महे च ग्रन्थोऽयं ध्रुवं कल्पिष्यते बहूनां बहुविधानां पाठकानां बहूपकारायेति। अन्ते चाशास्महे आनन्दवनविहारिणो भगवतो विश्वनाथस्य परमानुग्रहेण ग्रन्थोऽयं लोके प्रचयमियादिति सर्वं शिवम्।

वाराणसी,
४-९-१९८९
भाद्रपदशुक्लचतुर्थी
( गणेशजयन्ती )

वि० वेङ्कटाचलम्
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विदुषां सम्मतयः

## आचार्यः पट्टाभिरामशास्त्री 'पद्मभूषणम्'

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इत्यभियुक्तोक्त्या न्यायव्याकरणयोरन्योपकारकत्वेनोपादानं दृश्यते। उपकार्यस्वरूपलाभायोपकारक आश्रीयते। यल्लाभायोपकारक आश्रीयते तथैवोपकारकस्यापि किञ्चिदेकं स्वरूपं भवत्येव। तल्लाभायोपकारकान्तरस्याश्रयणम् तस्याप्युपकारकान्तरम् इति धारा भागीरथीधारेव प्रवहन्ती अन्ते यथा भागीरथीधारा सागरमवाप्य लीना भवति तथैव सर्वाणि शास्त्राणि दर्शनानि च जगतामीशितुः परमेश्वरस्य स्वरूपनिरूपणेन विश्राम्यन्ति। अत्र साक्षात् प्रवर्तमानानि कानिचन परम्परापरणीत्यन्यदेतत्। प्रचारभेदस्तु कामं सर्वत्र परिलक्ष्यते। एवं दृष्टिं प्रसार्यानुसन्धीयमाने समेषां शास्त्राणां दर्शनानाञ्च परमुद्देश्यमेकमेव सिद्धचेत्। प्रकारः परं भिन्न एव स्यात्। अत एव मीमांसकैरुपकारकेषु सन्निपत्योपकारकाणि आरादुपकारकाणीति प्रविभज्योपकारकाणां स्वरूपं प्रादर्शि। परमापूर्वोत्पत्तये परम्परया सन्निपत्योपकारकाणि साक्षादुपकारकत्वेनारादुपकारकाणीति पन्थास्तैः प्रदर्शितः। तत्राप्यधिकरणसिद्धन्याये पर्यालोच्यमाने उपकारकमप्युपकार्यं भवतीति निश्चितं भवति। एवञ्चोपकार्योपकारकभावमात्रेणाङ्गाङ्गिभावकलुषितचेतसां मिथः कलहे प्रवृत्तिं निरुणद्धि मीमांसकोन्नीतः पन्था इति सिद्धं भवति।

तत्र व्याकरणं पदगतसाधुत्वासाधुत्वयोः प्रतिपादनायैव केवलं न प्रवृत्तम्, अपि तु परतत्वनिरूपणायापि प्रवृत्तमित्यभ्युपगन्तव्यम्। सर्वेऽपि शास्त्रकृतो दर्शनप्रवर्तकाश्च पाणिनिकपिलादयो महर्षय इमे वेदाविरोधेन स्वस्यानितरसाधारण्या चिन्तनाशक्त्या परतत्वविवेचने प्रवृत्ताः। विभिन्नभागेषु गच्छन्तोऽप्यमी शब्दात्मकवेदमयेन सूत्रेणाबद्धा एकतामनुभवन्ति। दाशमिकसिद्धाधिकरणन्यायेनार्थे विद्यमानेऽपि देवतायाः शब्दात्मकत्वं यथा मीमांसकास्साधयन्ति यथा ओंकारात्मकशब्दब्रह्म साधयन्तो वैयाकरणाः पाणिनीयं दर्शनं विस्तारयन्तो दार्शनिकानां श्रेण्यां स्वीयमपि स्थानं द्रढयन्ति।

तत्र वैयाकरणभूषणसारस्य निर्माता श्रीकौण्डभट्टः व्याकरणग्रन्थकृत्सु विशिष्टं स्थानमावहति। अस्य ग्रन्थकृत इतिवृत्तं वैशिष्टयञ्च स्वीयविस्तृत-भूमिकायां विद्वद्वरेण मिश्रोपाह्वाद्याप्रसादेन साधु न्यरूपीति पुनस्तद्वर्णनं पिष्ट-पेषणमिव स्यात्। वैयाकरणभूषणसारस्य मूलमात्रस्य व्याख्यासहितस्य च प्रकाश-नान्यनेकानि विद्वद्भिस्सम्पादितान्युपलभ्यन्ते। तेष्वदः पण्डितश्रीआद्याप्रसादीयं प्रकाशनं काञ्चन विशेषतामाबिभर्ति। अस्मिन् प्रकाशने पण्डितमिश्रमहोदयः स्वीयां सवित्र्याख्यां व्याख्यां राष्ट्रभाषामयीं संयोज्य राष्ट्रभाषायाः कलेवरं संवर्धयन् विभिन्नभाषाभाषिणां प्रान्तेष्वपि आदराय पन्थानमुद्घाटयामास। यतो हि भूषणसारोऽयमा च हिमवतः आ च कुमार्यास्सर्वेषु प्रान्तेषु व्याकरण-पाठ्यक्रमान्तर्गतः सर्वैरेव व्याकरणाध्येतृभिरनिवार्यरूपेणाध्येतव्यश्च। अतश्चाय-मुपादेयतमो ग्रन्थः।

अध्यापकानामध्यापनमेवैकं कार्यं न भवति। अध्यापनेन सह विविधान् अनुसन्धानदृशा विवेचितान् लेखान् विलिख्य प्रकाशनम्, ग्रन्थान् व्याख्याय तेषां व्याख्यानम् सारगर्भितविषयोपेतभाषणप्रदानमपि कार्यकोटौ प्रविशति। पुस्तकेनैव विनेयाश्शिक्षिता न भवन्ति, किन्त्वध्यापकनामाचरणानि दृष्ट्वाऽपि ते शिक्षिता भवन्ति। यद्ययमध्वाऽध्यापकैरनुश्रियेत मङ्गलं क्रियेत इति शास्त्रीया पद्धतिः। ग्रन्थलेखरचनाधिकमपि मङ्गलमिति विभाव्य यदि वयं प्रवर्तामहे तर्हि नूनं छात्रान्दोलनात्मको विघ्नोऽपहतः स्यात्। तदस्मिन् मङ्गलमये कार्ये पं० आद्याप्रसादस्य प्रवृत्तिमभिनन्दामि। इतोऽप्यधिका प्रवृत्तिरेतादृशेषु कार्येषु भवतु, येन पारम्पर्यपरिप्राप्तशास्त्रसम्प्रदायः परिरक्षितस्स्यादिति भगवन्तमुमारमणमभ्यर्थयते।

पट्टाभिरामशास्त्री "पद्मभूषणम्"

श्रावण शु० १३, सं० २०४५
दि० २६-८-१९८८

## आचार्यः पण्डितरामप्रसादत्रिपाठी

**श्रीहरिः शरणम्**

व्याकरणशास्त्रं शिखरारूढं कुर्वन्महाभाष्यमाधारीकृत्य व्याकरणैकप्राणैः श्रीमद्भट्टोजिदीक्षितैः शब्दकौस्तुभाख्यं ग्रन्थरत्नं विरचय्य तत्रत्यनिर्णीतसिद्धान्तानां संक्षेपेण निबन्धनाय शाब्दबोधप्रकारप्रकाशिका इतरमतोक्तापसिद्धान्तप्रदूषिका च कारिकावली विरचिता। तामेवोपजीव्य विद्वद्वरेण शाब्दिकचक्रचूडामणिना श्रीकौण्डभट्टेन पटीयस्या दार्शनिकप्रणाल्या व्याख्यारूपेण वैयाकरणभूषणसाराभिधं ग्रन्थरत्नं निरमायि। हरिवल्लभादिविद्वन्मूर्धन्यैर्विरचिताभिर्दर्पण-काशिका-प्रभाऽऽप्रभृतिभिष्टीकाभिः तत्र स्थितानां धात्वर्थवाद-नामार्थवाद-समासशक्तिवाद-स्फोटवादादिदुरूहसिद्धान्तानां तात्पर्यस्य सारल्येन प्रकाशनमद्यतनानां पिपठिषूणां कृते न सम्भवति इतीमां दुरवस्थामालोच्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय-व्याकरणविभागे उपाचार्यपदमलंकुर्वता व्याकरणशास्त्रे कृतक्रियमाणभूरिपरि-श्रमेणायुष्मता पण्डितप्रवरेण श्रीमता आद्याप्रसादमिश्रमहोदयेन राष्ट्रभाषया निबद्धव्याख्यया निरुक्तं ग्रन्थरत्नं समलंकृतम्।

अधुना ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयतामिति न्यायकुसुमाञ्जलि-वचनानुमोदितमेधाह्रासमनुभवता 'हिन्दी' भाषया यदिदं व्याख्याय विद्वत्समक्ष-मुपस्थापितम् तदत्यन्तमौचित्यमादधद् विदुषां विविदिषूणाञ्च महते उपकाराय भविष्यति-इत्येवं स्वीयं शुभाशंसनं प्रकाशयति —

रामप्रसादत्रिपाठी
व्याकरणविभागाध्यक्षचरः
सम्मानितप्राध्यापकश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्
राष्ट्रपतिसम्मानितश्च

श्रावणे १३ त्रयोदश्याम्
बुधे २०४५ वैक्रमे

प्रोफेसरकालिकाप्रसादशुक्लः
अवकाशप्राप्ताचार्योऽध्यक्षश्च
वेदवेदाङ्गसंकाये
सम्पूर्णानन्द संस्कृत विश्वविद्यालये
वाराणसी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये व्याकरणविभागे उपाचार्यपदं भूषयता श्रीमता आद्याप्रसादमिश्रमहोदयेन विहिता वैयाकरणभूषणसारस्य 'हिन्दी' व्याख्या भूमिका च मया सम्यङ् निरीक्षिता परीक्षिता च। महाविदुषोऽस्य व्याख्यायां पदार्था निर्मले गङ्गाम्भसि मुक्तामणय इव भान्ति। व्याख्यायां पदार्थावगमे न केवलमन्तेवासिनां श्रममपाकरोति प्रत्युत विदुषामप्युपकारिणो वर्तते इत्यत्र नास्ति शङ्कापङ्कावकाशः।

भूमिकायां प्रायः शाब्दिकानां समे निगूणाः सिद्धान्ताः स्फोरिताः, प्रतिकूला दर्शनान्तरसिद्धान्ता युक्तयुक्त्या प्रत्याख्याताश्च। यदवलोकमवलोकं मनसि महानन्दो भवति चमत्कृतिरपि जायते। अद्यत्वे व्याख्या ईदृश्यः प्रायो दुर्लभा दृश्यन्ते। यतो हि संस्कृताकरग्रन्थानां तत्रापि परिष्कारबहुलानां ग्रन्थानां भाषान्तरकरणं लौहचणकचर्वणमस्ति। एतादृशेन व्याख्यानेन शाब्दिकजगतो महानुपकारो भविष्यतीत्यहं विश्वसिमि।

कालिकाप्रसादशुक्लः
धर्मसङ्घशिक्षामण्डलम्
दुर्गाकुण्डमार्गः, वाराणसी।

दिनाङ्क १७-८-८८

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

न्यायवैशेषिकविभागाध्यक्षचरः

डॉ० श्रीरामपाण्डेयः

१

कौण्डेन भट्टेन विनिर्मितोऽयं
बाभाति वाग्भूषणसारहारः।
वैयाकृतो खेलति यत्र रम्या
विद्वन्मनो रञ्जयतीह नित्यम् ॥

२

ग्रन्थस्य भागः सकलो दुरूहो
नाभाति विद्यार्थिनिकुञ्जपुञ्जे।
टीका अनेका रचितास्तथापि
को कौतुकं ता दधते न सर्वाः ॥

३

भावप्रकाशे निपुणाः समस्ता-
श्छात्राननभिज्ञाय न बोधिकास्ताः।
पृच्छन्ति सर्वत्र विपन्नभावा-
स्तोषञ्च कुत्रापि न ते लभन्ते ॥

४

आद्याप्रसादो वितनोति टीकां
काठिन्यदोषं परिहर्त्तुकामः।
सूरीविभाभा सफला समर्था
ग्रन्थिं समग्रां विनोति शक्ता ॥

५

सावित्री सरला प्रकाशनिपुणा टीकासमग्रा सती
ग्रन्थस्यास्य समग्रशब्दविभवं संस्फोर्य सा भासते।
टीकाकारहृदेककम्रमणी व्युत्पत्तिदा मोहदा
छिन्दन्ती बुधसंशयं मतिमतां बोधाय सा कल्पताम् ।

वाराणसी
दि० ३१-८-८८

श्रीमतीयः
पाण्डेयश्रीरामः

# प्राक्कथनम्

१९८० तमे ख्रिस्ताब्दे मम परमश्रद्धाभाजां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य तदानीन्तनानां कुलपतीनामिदानीं शिवसायुज्यप्राप्तवतां विश्वविश्रुतपण्डितानामाचार्यश्रीबदरीनाथशुक्लमहोदयानां सत्परामर्शेन प्रेरणया सम्मत्या च कौण्डभट्टकृतवैयाकरणभूषणसारस्य व्याख्यां कर्त्तुमहमारब्धवान्। परं तेषां समक्षमस्य ग्रन्थस्य प्रकाशनं न जातमिति विचार्यं अतीव दुःखायते मे मनः।

आदौ यच्चिकीर्षितम्, यच्च कर्त्तुमीहितमासीत्तत्सर्वं सम्पादयितुं नाहमपारिषम्, तदप्यस्मिन् ग्रन्थेऽन्तःस्थितान् बहून् रहस्यमयान् अस्फुटान्, पदार्थानुद्घाटयितुं यावच्छक्यमहमयतिषम् तत्र कियत् साफल्यमित्यत्र विद्वांस एव प्रमाणम्। अत्र मूलग्रन्थे प्रतिपादितविषयाणां सारांशोऽपि भूमिकायामुपनिबद्धः। ततः परमस्य ग्रन्थस्यैतिहासिकी पृष्ठभूमिः, ग्रन्थकर्त्तुरितिवृत्तम्, विभिन्नानां टीकानां टीकाकाराणाञ्च परिचयो विस्तरेणोपन्यस्तः।

वैयाकरणभूषणसारो व्याकरणदर्शनस्यादिमो निबन्धग्रन्थः। इतः पूर्वं न कोऽपि विद्वान् प्रकरणक्रमेण सुव्यवस्थितमीदृशं ग्रन्थं रचयामास। ग्रन्थस्यास्य प्रणेता रङ्गोजिभट्टात्मजः श्रीकौण्डभट्टो व्याकरणप्रक्रियापरम्पराप्रवर्तकानां श्रीभट्टोजिदीक्षितानां भ्रातुष्पुत्र आसीत्। भट्टोजिदीक्षितः स्वीये शब्दकौस्तुभे व्याकरणदर्शनस्य नैकान् पदार्थान् व्याचचक्षे। पातञ्जलमहाभाष्यमेवाधारीकृत्य श्रीदीक्षितः शब्दकौस्तुभं निर्ममे। तत्र प्रतिपादिता एव पदार्था अस्मिन् ग्रन्थे व्याख्याताः। उक्तञ्च —

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते॥

श्रीदीक्षितः सम्पूर्णव्याकरणदर्शनसिद्धान्तसङ्ग्रहरूपेण व्याकरणसिद्धान्तकारिकानामकमेकं लघुग्रन्थं निरमासीत्। तत्र चतुस्सप्तति (७४) कारिका आसन्। तासु काश्चन भर्तृहरेर्वाक्यपदीयाद् गृहीताः सन्ति। काश्चन च दीक्षितविरचिता विद्यन्ते तासां सूची परिशिष्टे संलग्ना वर्तते। तासामेव कारिकाणां

व्याख्यानमुखेन रङ्गोजिभट्टो वैयाकरणभूषणं वैयाकरणभूषणसारञ्च रचितवान्। रचनात्परमेव व्याकरणाध्ययनाध्यापने सर्वत्रास्य ग्रन्थस्य प्रचारो जातः। शतद्वयवर्षेभ्योऽद्यावधि अविच्छिन्नरूपेणास्य ग्रन्थस्याध्ययनाध्यापनपरम्परा प्रावर्तत। अधुनाऽपि देशे प्राच्यपद्धत्या प्रवर्तितेषु संस्कृतविश्वविद्यालयेषु, संस्कृतशिक्षासंस्थानेषु, संस्कृतपाठशालासु, आधुनिकविश्वविद्यालयेषु, महाविद्यालयेषु च संस्कृतपाठ्यक्रमे निर्धारितो विद्यते। बहुभिश्च विद्याविचक्षणैरस्य ग्रन्थस्य रहस्यभेदाय टीका विरचिताः। संस्कृतभाषायां रहस्यावृताः सर्वेऽपि पदार्थाः राष्ट्रभाषाहिन्दीमाध्यमेन प्रकाशिताः स्युरिदानीन्तनानां जनानामस्त्येका महत्याकाङ्क्षा। तस्या एवाकाङ्क्षायाः पूर्त्तयेऽस्य ग्रन्थस्य 'हिन्दी' व्याख्यां कर्त्तुमहमारब्धवान्।

अस्य ग्रन्थस्य प्रकाशनेऽनपेक्षितोऽधिकः समयो व्यतीतः। वर्षद्वयं यावद् पाण्डुलिपिः मुद्रणालये एव निक्षिप्ता आसीत्। प्रकाशनारम्भेऽपि मध्ये मध्ये कार्यावरोधो जातः, येन महन्नैराश्यं जातम्। परमकृपालोर्भगवतो विश्वनाथस्यानुकम्पया यथाकथञ्चिदस्य ग्रन्थस्य प्रकाशनं सम्पन्नम्। अतो विदुषां पुरतो ग्रन्थमेनमुपहरतः सन्तुष्यति मे चेतः।

अस्मिन् कर्मणि पूज्यैः गुरुवर्यैः सकलशास्त्रनदीष्णैः न्यायशास्त्रकेशरिभिः प्रशस्तप्रशासनकुशलैः शास्त्रार्थे विलक्षणप्रतिभायुतैः परमकारुणिकैराचार्यबदरीनाथशुक्लमहोदयैः सर्वतोऽधिकः स्नेहिलः सहयोगः प्रादायि, यदि तेषामाशीर्वचः, सत्प्रेरणा, सदुपदेशश्च न स्यात् मन्येऽस्य ग्रन्थस्य प्रकाशनं मत्कृते दुष्करमेवाभविष्यत्। अतस्तेषां चरणयोः भूयो भूयः सश्रद्धमाभारभारं प्रकटयितुं मम चित्तमाकुली भवति, किन्तु तथाविधान् शब्दानेव नैव स्मरामि येन तादृश्या भावनायाः प्रकाशनं सम्भवेत्। अतः परमभास्वराय सूर्याय दीपदानवत् विनीतभावेन तेषां चरणयोः सबहुमानं सश्रद्धं प्रणामाञ्जलीनर्पयामि।

अस्माकं गुरुवर्याणां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये भूतपूर्वव्याकरणविभागाध्यक्षाणां पण्डितश्रीमुरलीधरमिश्रमहोदयानामाधमर्ण्यं शिरसा वहामि, येषां वात्सल्यमनुकम्पा चाध्ययनकालादेव मे सुलभा। अद्यापि च ते स्वीयैराशीर्वचोभिः मां समुत्साहयन्ति।

ग्रन्थग्रन्थिस्फोरणनिपुणैः विविधविद्याविद्योतितान्तःकरणैः शब्दशास्त्रधुरीणैः, तपोपूतैः गुरुवर्यैराचार्यश्रीरामप्रसादत्रिपाठिभिः ग्रन्थस्यास्य बहुधा व्याख्यानेनाध्यापनेन चाहं भृशमुपकृतः। अतस्तेषां पादपद्मयोः नतेन मूर्ध्ना सप्रश्रयं नैकान् प्रणामान् भूयोभूयः विज्ञापयामि। व्याकरणसाहित्यदर्शनाद्यनेकशास्त्रविशारदानां विविधशास्त्रग्रन्थलेखने निपुणमतीनां प्रतिभाश्रितां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य दर्शनविभागाध्यक्षचराणामाचार्यमहाप्रभुलालगोस्वामिमहोदयानां शिवं नामधेयं स्मरामि ये ग्रन्थव्याख्यानकाले मम गृह एवागत्य सहजयानुकम्पया किञ्चिदभिनवं परामृशन्तो नैकान् प्रकाशनविधींश्चोद्बोध्य मामुपकृतवन्तः, तदर्थं तेषामाधमर्ण्यं शिरसा वहामि।

अस्मिन्नेव क्रमे शब्दशास्त्रपारङ्गताः राधामहाकाव्याद्यनेकमहाकाव्यप्रणेतारः भूतपूर्वव्याकरणविभागाध्यक्षाः पण्डितश्रीकालिकाप्रसादशुक्लमहोदयाः व्याकरणन्यायवेदान्तादिविविधशास्त्रनिपुणाः, शास्त्रार्थसभायां तर्कधुरीणाः, काव्यप्रणयिष्वग्रेसराः, न्यायवैशेषिकविभागाध्यक्षचराः पण्डितश्रीरामपाण्डेयमहोदयाः, प्रतिदिनं गङ्गास्नानसन्ध्यावन्दनादिपूर्वकं दुर्गासप्तशत्याः स्तवनेन तपोमूर्त्तयः पण्डितश्रीरामप्रीतिद्विवेदिनः सादरं सश्रद्धं भूयो भूयः प्रणम्यन्ते ये च समये समयेऽध्यापनेन प्रेरणया शुभाशीर्वचोभिश्च मां कृतार्थी कृतवन्तः।

अत्रावसरेऽस्माकमग्रजकल्पान् प्रशासनदक्षान् आई० ए० एस० पदवीकान् भारतसर्वकारस्य वित्तमन्त्रालये संयुक्तसचिवान् डॉ० जनार्दनप्रसादसिंहमहोदयान् हार्दिकैः साधुवादैः समाजयितुमिच्छामि ये च परिवारप्रमुखसदृशेन अतीवस्नेहेन चास्मिन्शास्त्रानुष्ठाने प्रवृत्त्यर्थं मां मुहुर्मुहुः प्रेरितवन्तः। ग्रन्थस्यास्य प्रकाशने योगतन्त्रविभागे प्राध्यापकैः डॉ० राजनाथत्रिपाठिभिः बहुभिः मम मित्रैः कैश्चिद् धीमद्भिश्छात्रैः परिवारजनैश्च सहयोगोऽस्यधायि ते सर्वेऽप्यभिनन्दनीया एव। तेषु मम पत्नी प्रियम्बदादेवी सर्वथा प्रशंसार्हा, या ग्रन्थप्रकाशनकाले स्वीयेऽनारोग्येऽपि सर्वानपि गृहभारान् स्वशिरस्यारोह्य गृहप्रपञ्चात् मां पृथक्कृत्यैकान्तचिन्तने व्यवस्थां सम्पादितवती।

अस्यानुष्ठानस्य पूर्त्तये यावच्छक्यं मया सुप्रयत्नोऽभ्यूहितस्तथापि ममाज्ञानेन प्रमादेन च बह्वयो भ्रान्तयः सम्भवन्ति, काश्चन मुद्रणाऽशुद्धयोऽपि समभवन् तत्कृतेऽहं विनतभावेन क्षमां याचे। अन्ते च पराम्बाऽन्नपूर्णायाः भगवतो विश्वनाथस्य च चरणेषु प्रणामाञ्जलीन् समर्पयन् विरमामि, स्मरामि, च -

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥ इतिशम्।

आषाढ़शुक्लस्य पूर्णिमा
वि० सं० २०४५
[ २९ जुलाई, १९८८ ]

विदुषां वशंवदः -
आद्याप्रसादमिश्रः
उपाचार्यः, व्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्

# प्रास्ताविकम्

## पाणिनीयव्याकरणस्य वेदाङ्गत्वम्

वेदाङ्गेषु व्याकरणस्य मुख्यतमं स्थानम्। 'मुखं व्याकरणं स्मृतम्' इत्यभियुक्तोक्तिरद्यापि प्रसिद्धा सकलजनानुमोदिता च। वेदाङ्गत्वञ्चास्य शब्दानुशासनतया तदेव व्याकरणस्य साक्षात् प्रयोजनम्। 'अथ शब्दानुशासनम्' इति ह्यनुवदन् पतञ्जलिरिममेवार्थं[१] प्रत्यपीपदत्। महाभाष्यकार 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इत्युक्त्या व्याकरणस्य स्फोटात्मकब्रह्मणा तादात्म्याख्यं महत्त्वं विबोधयन्नपि शब्दानुशासनं नाम व्यारकरणस्य परमं प्रयोजनमिति स्वीयया नवनवोन्मेषशालिन्या प्रज्ञया संसाधितम्। तत्रादौ वेदाङ्गेषु प्रामुख्यं भजमानेषु अस्य व्याकरणशास्त्रस्यैतिहासिकमानुशासनिकञ्च निरूपणं संक्षेपेण प्रस्तूयते।

[१]अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥

वेदो हि भारतीयवाङ्मयस्य मूर्धन्यतमो ग्रन्थः। अस्याध्ययनं द्विजन्मनां कृते प्रथमकर्त्तव्यतया सोद्घोषं प्रतिपादयन्ति श्रुतिस्मृत्यादयः। यथोक्तम्—'विद्या ह वै ब्राह्मणमाजगाम, शेवधिष्टेऽहस्मि रक्ष माम्'। माण्डूक्योपनिषद्[२] विस्पष्टमाचष्टे—'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति—परा, चैवापरा च। तत्रापरा—ऋग्वेदो यजुर्वेदः, सामवेदोऽथर्ववेदः शिक्षा, कल्पो, व्याकरणम्, निरुक्तम्, छन्दो ज्यौतिषमिति। अथ परा—यया तदक्षरमधिगम्यते'।

वेदाध्ययनस्यापरिहार्यतां संसाधयन् भगवान् मनुः ब्रूते—

[३]योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥

न केवलमङ्गिन एव वेदस्याध्ययनं विधेयम्। अपि तु साङ्गस्यैव वेदस्याध्ययनं विहितं सर्वत्राचारशास्त्रे। यथा भगवान् पतञ्जलिः ब्रूते—'ब्राह्मणेन

---

१. ब्रह्मसूत्रभाष्यम् १।३।२८।
२. मुण्डकोपनिषद् १।२।४।
३. मनु० अध्याय—२

निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'। पाणिनिशिक्षायामपि साङ्गवेदाध्ययनस्यैव माहात्म्यमुपनिबद्धं वर्तते। उक्तञ्च[1]—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

उक्तेषु षडङ्गेषु प्रधानं व्याकरणम्। यथोक्तं [2]फणिभाष्ये—'प्रधानञ्च षडङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति'। तत्र—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टौ च शाब्दिकाः॥

इत्यादिरीत्या अष्टविधानि व्याकरणानि व्याख्यातानि। केचित्तु नवधा व्याकरणमित्यपि प्रतिपादयन्ति। तेषु व्याकरणेषु पाणिनिव्याकरणस्यैव प्रामुख्यमित्यामनन्ति विद्वाँसः। 'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इत्युक्तिः सर्वविदितैव।

अस्य पाणिनिव्याकरणस्याधारभूतानि 'अ इ उ ण्' प्रभृतीनि सूत्राणि महेश्वरप्रसादाल्लब्धत्वाच्चतुर्दशसूत्री श्रुतिरित्यवमभ्युक्तैरभ्यूहितम्। महाभाष्यकृताऽप्युक्तम्—'सोऽययक्षरसमाम्नायो पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः इति। भर्तृहरिरप्याह—यथैवेदमव्युच्छिन्नं चन्द्रतारकादि। एवमस्याक्षरसमाम्नास्य न कश्चिदाधुनिकः कर्त्ताऽस्ति। एवमेव वेदपारम्पर्येण स्मर्यमाण इति। अस्य पाणिनिव्याकरणस्य श्रुतिमूलकत्वं समर्थयन् ऋक्तन्त्रव्याकरणे शाकटायनः प्राह—'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तम्, यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच' बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज-ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते। न भुक्त्वा, न नक्तं प्रब्रूयाद् ब्रह्मराशिः इति। लघुशब्देन्दुशेखरे श्रीनागेशेनाप्युक्तम्—'श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्। अत्र हि एव शब्दोऽप्यर्थकः। तेन पाणिनिव्याकरणात् पूर्वं वेदस्य पञ्चाङ्गत्वापत्तिः निरस्ता'।

वस्तुतस्तु विशेष्यसङ्गत एवकारोऽन्ययोगव्यवच्छेदको भवति। यथा—'पार्थ एव धनुर्धरः' इत्यत्र पार्थेतरावृत्तिर्यद्धनुर्धरत्वं तद्वान् विलक्षणो धनुर्धर

---

१. पाणिनीय शिक्षा—४१।४२।
२. महाभाष्यम्, पश्पशाह्निकम् पृष्ठम् १४७।
३. महाभाष्यम्, झभञ् १।१।

इत्यवगम्यते। नैतावता पार्थेतरस्मिन् धनुर्धरत्वं व्यवच्छिद्यते अपि तु पार्थवृत्ति-विलक्षणधनुर्धरत्वमन्यस्मिन् नास्तीति गम्यतेऽन्यथा व्यवहारमात्रोच्छेदापत्तिः स्यात्तथैवेहापि विलक्षणव्याकरणत्वेन स्वरवैदिकप्रयोगादिनिर्माणनिरूपणकर्तृ-त्वरूपवैशिष्ट्यस्य चन्द्रादीतरव्याकरणे नास्तीतिविशिष्टं वेदाङ्गत्वमेतस्मि-न्नेवेति बोद्धयते। इतरव्याकरणेषु वेदाङ्गत्वं निराक्रियतेऽन्यथा एवशब्दप्रयोग-वैयर्थ्यापत्तिः स्यादिति।

पाणिनेः पूर्वं बहुषु व्याकरणेषु सत्स्वप्यस्याष्टकस्य निर्माणे जाते तानि तिरोहितान्येवाभवन्। इदानीं तेषां नामान्येव स्मर्यन्ते। व्याकरणशास्त्र-प्रणेतारो बहव आचार्या बभूवुः। महर्षिपाणिनिः स्वस्यामष्टाध्यायां विभिन्नानामाचार्याणां मतवैविध्यप्रदर्शनाय नामग्राहपूर्वकं तान्निर्दिशति। तत्र च स्फोटायन--गार्ग्य--शाकटायन--आपिशली-गालव--चाक्रवर्मण--शाकल्याद्यने-काचार्याणां नामानि स्मर्यन्ते। तद्यथा—

१. अवङ् स्फोटायनस्य [ ६।१।१२३ ]
२. ओतो गार्ग्यस्य [ ८।३।२० ]
३. त्रिप्रभृतिषु शाकटायनस्य [ ८।४।५० ]
४. वा सुप्यापिशलेः [ ६।१।९२ ]
५. ई ३ चाक्रवर्मणस्य [ ६।१।१३० ]
६. अड् गार्ग्यगालवयोः [ ७।३।९९ ]
७. लोपः शाकल्यस्य [ ८।३।१९ ]

तेष्वाचार्येषु केषाञ्चन मतं विकल्पेन स्वीकृतम्, प्रत्याख्यातमपि केषा-ञ्चिन्मतम्। तद्यथा सूत्रमुक्तम्—तदशिष्यं संज्ञाप्रमाणत्वात् [ १।२।५३ ]।

तत्=प्रकृतम्, युक्तवद्भावलक्षणं निर्दिश्यते तदशिष्यम्=न वक्तव्यम्, संज्ञाप्रमाणत्वात्। संज्ञाशब्दा हि नानालिङ्गसंख्याः प्रमाणम्। तत्र लिङ्गवचनञ्च स्वभावसिद्धमेव न यत्नप्रतिपाद्यम्। तदर्थं सूत्र नापेक्षितमित्यादिरीत्या खण्डितम्। 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' [ १।२।५६ ] इत्यत्रापि पाणिनिः पूर्वाचार्याणां मतं प्रत्याचष्टे। अथ च पाणिनिना येषामाचार्याणां सिद्धान्तः स्वीयेशास्त्रेऽङ्गीकृतः, तेषां वेदाङ्गत्वं पूर्वत एव सुनिर्णीतम्। तदित्थम्, प्राक्तन-व्याकरणानां वेदाङ्गत्वे तदीयपरम्परायां नूतनत्वेनावधेयरूपेणाविर्भूतस्य सर्वथा वैज्ञानिकस्य सर्वाङ्गपूर्णस्य पाणिनिव्याकरणस्य वेदाङ्गत्वमव्याहतमावश्यकञ्च। परमाधुनिकेषु कौमारादिव्याकरणेषु निर्वचनमात्रपरतया तेषां वेदाङ्गत्वं नास्तीति विभाव्यते सुधीभिः। गणरत्नमहोदधौ वर्धमानोपाध्यायेनोक्तम्—

**लौकिकव्यवहारेषु यथेष्टं चेष्टतां जनः।**
**वैदिकेषु च मार्गेषु विशेषोक्तिः प्रवर्तताम्॥**

वेदेऽपि लौकिका एव शब्दा वाहुल्येन प्रयुज्यन्ते। केचन एव तद्विपरीताः सन्ति तथाविधानां वैदिकशब्दानां व्याख्याने न प्रवर्तन्ते कौमारादिव्याकरणानि। अतः कौमारादिव्याकरणानां न वेदाङ्गत्वम्. तदुत्तरवर्त्तिषु व्याकरणेषु त्रिमुनि व्याकरणस्यैव वेदाङ्गत्वं सिद्धान्तितं सर्वत्र। अस्मिन्नेव पाणिनिव्याकरणे स्वरचिन्ता, वैदिकशब्दनिर्वचनञ्च कृतं विद्यते।

पञ्जीकारस्त्रिलोचनदेवो दुर्गसिंहव्याख्याप्रसङ्गे लिखति—वैदिकाः शब्दाः लौकिकज्ञैः पुरुषैः ये यथोक्ताः येन प्रकारेण वेदे प्रतिपादितास्तथैव ते निर्णीतार्थाः ज्ञेयाः। उक्तञ्च—

> **वैदिकाः लौकिकज्ञैश्च ये यथोक्तास्तथैव ते।**
> **निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसङ्ग्रहः॥**

अद्वैतसिद्धिकृद्भिः [1]मधूसूदनसरस्वतीपादैः स्पष्टमभिधीयते—कौमारादि-व्याकरणं न वेदाङ्गम्, लौकिकपदमात्रव्याख्यानपरत्वात्।

[2]निरुक्तकृद्भिर्यास्कैरुक्तम्—येषां शब्दानां प्रयोगो वेदे दृश्यते तेषां सर्वेषां शब्दानां निर्वचनं वैदिकैर्धातुभिरेव कर्त्तव्यमित्येष नियमो नास्ति, अपि तु लौकिकसंस्कृतेः प्रसिद्धेभ्यो धातुभ्योऽपि भवति। येषामपि शब्दानां संस्काराय धातवः, पाणिन्यष्टके न व्यपदिष्टास्तेषां व्युत्पत्तये 'उणादयो बहुलम्', [ ३।३।१ ] इति सूत्रमुपदिष्टम्। इत्थं हि लौकिकवैदिकोभयशब्दानां साधुत्वक्षमस्य पाणिनि-व्याकरणस्य वेदाङ्गत्वं निष्प्रत्यूहमिति।

## पाणिनिव्याकरणस्य माहात्म्यम्

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इत्युक्त्या इतरव्या-करणापेक्षया पाणिनीयव्याकरणस्य वैशिष्ट्यमिति सुस्पष्टं प्रतिभाति। एतत्त्व-वधेयं यत् अर्थावगत्यर्थं वक्ता शब्दप्रयोगं कुरुते। अर्थज्ञानञ्च विना वृत्तिज्ञानं न जायते। वृत्तिग्राहकेषु च व्याकरणस्यैव प्राधान्यमित्यत्र शिष्टोक्तिरेव नः शरणम्। तथाहि—

> **शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च।**
> **वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य धीराः॥**

इत्थं हि शक्तिग्राहकेषु व्याकरणस्य प्राधान्यमित्यवसीयते। वाक्ये पदानि प्रविभज्य पदे प्रकृतिप्रत्ययौ च विभज्यार्थविशेषे विहितप्रत्ययात् धातु-निष्पन्नप्रकृतेश्चार्थमवगत्य पदार्थसापेक्षं वाक्यार्थमभ्युपगच्छन्ति मनीषिणः। यद्य-

---

१. शिवमहिम्नस्तोत्रम्—मधुसूदनी टीका।
२. निरुक्तम् २।२।६।

पीतरव्याकरणेष्वपि प्रकृतिप्रत्ययविभागपूर्वकमर्थविशेषे प्रत्ययविधानं क्रियते परन्तु तत्र साधुत्वान्वाख्यानमेव प्रामुख्येन विधीयते, न तु तत्तदर्थबोधनम्। पाणिनीयव्याकरणे तु अर्थविशेषनिर्देशपुरस्सरमेव शब्दानुशासनं संसाध्यते। अत्र हि अर्थविशेषप्रतिपादनमनुरुद्धच स्वरादिविवेचनं वैदिकप्रत्ययार्थबोधनञ्च यथा साधितम्, न तथान्यस्मिन् व्याकरणे। स्वरहीनः शब्दप्रयोगः प्रयोगकर्त्तारमेवार्थभेदवशाद् हन्ति। महाभाष्यकृता शब्दानुशासनप्रयोजनप्रसङ्गे उक्तम्—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

यथा—पुरा किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुरुषान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान्। तथाभूतः सन् वर्धस्वेति प्रतिपादयितुमिन्द्रशत्रुर्वर्धस्वेति प्रयुक्तम्। अत्र इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये प्रमादादाद्युदात्त उक्तस्तेन पूर्वपदप्रकृतिस्वरघटितपदोच्चारणेन बहुव्रीह्यर्थो लब्धः। तथा सति इन्द्रः शत्रुः शातयिता यस्यैवं भूत्वा वर्धस्वेति अर्थे जाते उत्पन्नमाभिचारिकं पुरुषं इन्द्रो जघान। स्वरदोषादिष्टसिद्धिर्न जाताऽपितु विपरीतैव स्थितिर्जाता। अत्र हि इन्देर्धातोरौणादिके रन् प्रत्यये कृते इन्द्रशब्द आद्युदात्तो व्युत्पादितः। तेन इन्द्र एव अस्य हींसकः सम्पन्नः। पाणिनिव्याकरणातिरिक्तव्याकरणाध्ययनेऽपि शब्दसाधुत्वज्ञानं संभवति, तथापि स्वरादीनामनिर्देशादभीष्टार्थसिद्धिर्न संभाव्येत् इति पाणिनिशब्दानुशासनस्य वैशिष्टचं न तिरोहितं विदुषाम्।

उच्यते—स्वाध्यायोऽध्येतव्य इति। स्वाध्यायो वेदः तथा च नित्यकर्मत्वेन वेदाध्ययनस्य च विधिरस्ति। अपि चोक्तम्—अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत च। अध्ययनं तु न केवलं वेदस्यापि तु वेदाङ्गानामपि। [१]मनुस्मृतावप्युक्तम्—

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥

प्रधानञ्च षडङ्गेषु व्याकरणमित्यभिदधाति महाभाष्यकारः पतञ्जलिः। व्याकरणेषु प्रधानं पाणिनीयव्याकरणमित्यङ्गीक्रियते सर्वैरपि प्रमाणभूतैराचार्यैः। अपि चेदानीं विद्यमानानामपाणिनीयव्याकरणानामप्याधारभूतं तत्त्वं पाणिनीयव्याकरणमेव। अधुना कातन्त्र-चान्द्र-हेमचन्द्रशब्दानुशासनादीनि व्याकरणान्यैतिहासिकीमभिवृद्धिं कुर्वन्ति विराजन्ते। गुरुपदहालदारमहोदयेन स्वीये 'व्याक-

---

१. मनु० अध्या० २ श्लोक १४०।

करणदर्शनेर् इतिहास' इत्याख्ये ग्रन्थे महेशव्याकरणस्य चर्चा कृता। उक्तञ्च तत्र—

[1]शब्दाम्बुधिं प्रमथ्यैव शङ्करेण यदुद्धृतम्।
माहेशं तद्विजानीयात् कृत्स्नं व्याकरणामृतम्॥

अनेनैतत् प्रतीयते यद्देवाधिदेवः महेश्वरः शब्दशास्त्रस्याकरस्थानीयः। अत एव व्याकरणशास्त्रनिष्णातेषु पण्डितसमवायेष्वेका गाथा अद्यापि कर्णाकर्णिकयाऽकर्ण्यते। यथोक्तम्—

[2]समुद्रवद्व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।
तद्भागभागाच्च शतं पुरन्दरे कुशाग्रबिन्दूत्पतितं हि पाणिनौ॥

महाभाष्येऽपि शब्दान्तरेणैष एव निर्देश उपलभ्यते। यथा चाभिहितम्—

[3]बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः शब्दपरायणं प्रोवाच, न चान्तं जगाम।

एतेनैतत् सिद्ध्यति सकलशास्त्रपारङ्गतो देवगुरुश्चतुर्दशभुवनाधिपतये सर्वसमृद्धिसम्भारभाजनाय महेन्द्राय शब्दपारायणमर्थात् शब्दसङ्ग्रहरूपं ग्रन्थं रचितवान्। परन्तु तेन रूपेण व्याकरणज्ञानं सर्वथाऽसम्भवं मन्यमान उत्सर्गाप्रवादलक्षणं व्याकरणं प्रणिनाय। अनेन लघुनोपायेन व्याकरणज्ञानं सम्प्राप्य वैयाकरणो वेदार्थज्ञाने क्षमो भवति। इत्थं हि वेदार्थज्ञानसंसाधकस्य पाणिनिव्याकरणस्य बार्हस्पत्यव्याकरणादपि वैशिष्टयम् अस्ति। अत एवेदं व्याकरणं महेश्वरादागतं तत्कृपया प्राप्तं वेति माहेश्वरव्याकरणं कथ्यते। ज्ञानविषये शिवस्य प्राशस्त्यमुद्घोषितं वर्तते स्मृत्यादिषु। यथाचोक्तम्—

आरोग्यं भास्करादिच्छेत् धनमिच्छेत् हुताशनात्।
ज्ञानञ्च शङ्करादिच्छेत् मुक्तिमिच्छेद् जनार्दनात्॥

माहेश्वरव्याकरणमेव कालक्रमेण पाणिनीयव्याकरणमिति नाम्ना ख्यातमित्यत्र नास्ति केषामपि सचेतसां काचिद् विप्रतिपत्तिः। पाणिनिव्याकरणस्य मूलं चतुर्दशसूत्राण्येव, तानि च धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थमिति। उक्तञ्च नन्दिकेश्वरकृतकारिकायाम्—

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥

---

१. व्याकरणदर्शनेर् इतिहास—पृ० ४६५।
२. व्याकरणदर्शनेर् इतिहास—पृ० ४६६।
३. महाभाष्यम्—पस्पशाह्निकम्—पृ० ५४।

आचार्यपाणिनिमते सर्वेषां शब्दानां धातुमूलकत्वमिति। इन्द्रेणापि समर्थितम्—अन्त्यवर्णसमुद्भूताः धातवः परिकीर्त्तिताः। इति।

ऐन्द्रव्याकरणे न केवलं शिवसूत्रसमवायमित्यभिलक्ष्य तदुक्तम्, अपि तु तस्य शब्दयोनित्वमपि ज्ञात्वा प्रदर्शितम्। भरताचार्येण पाणिनिव्याकरणस्य देवाधिदेवेन महेश्वरेण प्रतिष्ठितत्त्वं प्रतिपादयता उक्तम्—

पदज्ञैर्नीतिनिर्बन्धः कर्त्तव्यो मुनिभाषिते।
अनुस्मरन्तः पर्यायान्नाद्रियन्ते हि लक्षणम्॥
यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात्।
तानि किं पदरत्नानि सन्ति पाणिनिगोष्पदे॥

एतदनुचिन्तनेनैतत् सुस्पष्टं प्रतिभाति यत् |पाणिनिव्याकरणं महेश्वरव्याकरणमेव। अथ च पाणिनीयातिरिक्तस्य कस्यापि व्याकरणस्य न तादृशं माहात्म्यं निश्चीयते यादृशञ्च महेश्वरेण प्रवर्तितस्य पाणिनिव्याकरणस्य।

एतच्छास्त्रं महर्षिपाणिनिना महेश्वरप्रसादाल्लब्धमिति विषये भविष्यपुराणस्य द्वितीयखण्डे एकत्रिंशेऽध्याये उक्तम्—

समानस्य सुतः श्रेष्ठः पाणिनिर्नामविश्रुतः।
कणभुग् वरशिष्यैश्च शास्त्रज्ञैः स पराजितः॥
लज्जितः पाणिनिस्तत्र गतस्तीर्थान्तरं प्रति।
स्नात्वा सर्वाणि तीर्थानि सन्तर्प्य पितृदेवताः॥
केदारमुदकं पीत्वा शिवध्यानपरोऽभवत्।
पर्णाशी सप्तदिवसांश्च जलभक्षस्ततोऽभवत्।
ततो दशदिनान्ते स वायुभक्षो दशाऽहनि।
अष्टाविंशदिने रुद्रो वरं ब्रूहि वचोऽब्रवीत्॥
इति श्रुत्वा महादेवः सूत्राणि प्रददौ मुदा।
सर्ववर्णमयान्येव अइउणादिशुभानि वै॥

पाणिनिव्याकरणस्य वैशिष्ट्यं प्राचीनैः ऋषिभिः विद्वद्भिश्च बहुधाऽङ्गीकृतम्। वृद्धिरादैजिति सूत्रे महर्षिपतञ्जलिना उक्तम्—

प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण।

तस्मिन्नेव सूत्रे किञ्चिदग्रे पतञ्जलिना पुनरप्युक्तम्—

सामर्थ्ययोगान्नहि किञ्चिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात्।

उदक् च विपाशः [ ४।२।७४ ] इति सूत्रे काशिकाकारेणाभिहितम्—महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य।

पाणिनेः प्रशंसायां ऋग्वेदभाष्यकारेण वेङ्कटमाधवेनाभिहितम्—शाकल्यः पणिनिर्यास्कः इत्यृगर्थपरास्त्रयः। अर्थात् ऋग्वेदस्य त्रयो ज्ञातार आसन्—शाकल्यः, यास्कः, पाणिनिश्च।

वेदार्थज्ञाने स्वरज्ञानमेव सर्वतः प्रधानं साधनमिति न तिरोहितं वेदार्थविदां विदुषाम्। महर्षिपाणिनिना स्वरसंसाधनाय सूक्ष्मविवेचनं कृतम्, तदर्थं पञ्चावृत्तशताऽधिकानि सूत्राणि विरचितानि। अपाणिनीयव्याकरणेषु न क्वचित् स्वरसाधनप्रक्रियाऽवलोक्यते।

न केवलं भारतीया एव विद्वांस पाणिनिव्याकरणेन प्रभाविता आसन् अपि तु वैदेशिका अपि शास्त्रधुरीणाः पाणिनेः वैशिष्ट्यं प्रतिपादयामासुः। तद्यथा—

१. चीनदेशीयः पथिकः ह्वेनसाङ्ग उक्तवान्—महर्षिः पाणिनिः पूर्णमनोयोगेन शब्दभण्डारतः शब्दराशिं सञ्चेतुमारब्धवान्। १००० पद्येषु सर्वा व्युत्पत्तिः विरचिता। प्रतिपद्यं ३२ अक्षराणि सन्ति। एतावतैव सर्वोऽपि प्राचीनो नवीनश्च ज्ञानराशिः परिसमाप्तः। शब्दाक्षरविषयकं किमपि ज्ञानं नावशिष्टमभूत्।

२. इङ्गलैण्डदेशनिवासी प्रो॰ मोनियरविलियम्समहोदयोऽभिधत्ते-संस्कृतव्याकरणमष्टाध्यायी ग्रन्थः मानवमस्तिष्कस्य प्रतिभाया आश्चर्यतममुदाहरणमस्ति यदद्यावधि केनचिदन्येन देशेन न समक्षमुपस्थापितम्।

३. जर्मनदेशोद्भवः प्रो॰ मैक्समूलरोऽभिदधाति—'हिन्दू'जातीनां व्याकरणयोग्यता जगति कस्या अपि जातेः व्याकरणमतिशेते।

४. 'कोलब्रुक' महाशयस्य मतम्—व्याकरणस्य नियमा अत्यन्तं सावधानतया विनिर्मिताः, तेषां शैली प्रतिभापूर्णा आसीत्।

५. सरः W. W. हण्टरमहोदयः कथयति—विश्वस्य व्याकरणेषु पाणिनिव्याकरणं सर्वोत्कृष्टं विद्यते। तस्य वर्णशुद्धता धात्वन्वयसिद्धान्तः, प्रयोगविधयश्च अपूर्वा अद्वितीयाश्च वर्तन्ते।

६. लेनिनग्राडस्य प्रो॰ टी॰ शेखातसकी महोदयो वदति—पाणिनीयव्याकरणं मानवमस्तिकस्य सर्वोत्कृष्टासु रचनास्वन्यतममिति।

सूत्राणां लक्ष्ये प्रवर्तनाय विलक्षणैव प्रतिभा आसीत्। द्वयोः सूत्रयोरेकस्मिन् लक्ष्ये युगपत्प्रवृत्तौ क्वचित् विप्रतिषेधे परं कार्यम्, क्वचित् पूर्वत्रासिद्धम्,

"वासरुपोऽस्त्रियाम् [ ३।१।९४ ] इत्यादिरीत्या संशयनिरसनपूर्वकमन्यतरसूत्र-प्रवृत्तिः निर्णीयते । एतादृशं गणितीयग्रन्थिगुम्फितं वैलक्षण्यमवलोक्य कस्य प्रतिभाजुषो विदुषश्चित्तं नाश्चर्ययुतं भवति ।

## पाणिनिव्याकरणस्य दार्शनिकता

यद्यपि 'अथ शब्दानुशासनम्' इति महाभाष्यकाररीत्या लोके वेदे च प्रयुज्यमानानां शब्दानां साधुत्वासाधुत्वविवेचनमेव व्याकरणस्य मुख्यं प्रयोजनं प्रतिभाति, तथापि यदा भाषायां प्रयुक्तानां शब्दानां प्रयोगकारणचिन्तनं भवति, पदार्थस्य तत्सामर्थ्यस्य चाऽऽलोडनं क्रियते, तदा व्याकरणमपि दर्शनशास्त्रभूमिका-मधिगच्छति । अनया रीत्या व्याकरणशास्त्रं द्विधा विभज्यते—

(१) शब्दसाधुत्वविषयकम् ।

(२) पदपदार्थतत्सामर्थ्यचिन्तनविषयकञ्चेति ।

तत्र प्रथमविषयकाध्ययनं व्याकरणप्रक्रियासंबद्धम्, तद्व्याख्यानं तु नेह विवक्षितमिति ज्ञेयम् । द्वितीयभागचिन्तनमेव व्याकरणदर्शनव्यपदेश्यमित्य-वधेयम् । व्याकरणदर्शने स्फोटः, ध्वनिः, लकारार्थः, नामार्थः, सुबर्थः, समासशक्तिः, शब्दशक्तिरित्यादिविषयाः विचार्य्यन्ते ।

शब्दतत्त्वविद आचार्याः व्याकरणदर्शने अर्थावबोधाय स्फोटाख्यमेक-मभिन्नं परमतत्त्वं मन्वते । अत्र विषये 'अवङ् स्फोटायनस्य' [ ६।१।१२३ ] इति सूत्रे स्फोटायनशब्दं व्याचक्षाणो हरदत्तो[१] व्याचष्टे—'स्फोटोऽयनं पारायणं यस्य स स्फोटायनः स्फोटप्रतिपादनपरो वैयाकरणाचार्यः । ये त्वौकारं पठन्ति ते नडादिषु अश्वादिषु वा स्फोटशब्दस्य पाठं मन्यन्ते' । अनेनैतत् प्रतीयते यत् स्फोटायनो वैयाकरणानां स्फोटतत्त्वस्य प्रथमव्याख्याता बभूव । 'स्फोट-सिद्धिः' नामकग्रन्थस्य प्रणेता श्रीभरतमिश्रो ब्रवीति—यदुदुम्बरायण आचार्यः नित्यशब्दात्मनः स्फोटस्य व्याख्यानं कृतवान् । आचार्यो व्याडिः प्राचीनभारतीय-वाङ्मये दाक्षायणेति नाम्ना ख्यातः, स संग्रहनामकं व्याकरणदर्शनग्रन्थं व्यरचयत् । एतद्विषये उद्योतकारो नागेशोऽभिधत्ते—संग्रहो[२] व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः । एष ग्रन्थ इदानीं नैव प्राप्यते, परं कीदृशाः किं विषयकाश्च विचारास्तत्र संग्रथिता इत्येतद्विषये महाभाष्ये पतञ्जलिनोक्तम्—संग्रहे[३] तावत्

---

१. काशिका-पदमञ्जरी—६।१।१२३ ।

२. महाभाष्यम्—पस्पशाह्निकम्—उद्योतः ।

३. महाभाष्यम्—पस्पशाह्निकम्— ।

प्राधान्येन परीक्षितम्—नित्यो वा स्यात् कार्यों वेति। तत्रोक्ताः दोषाः, प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः यद्येव नित्योऽथापि कार्यं उभयथापि लक्षणं प्रवर्त्यम्।

महर्षिपाणिनिः महत्या तपश्चर्यया—शिवमाराध्य तत्प्रसादेनाध्यात्मिकीशक्ति सम्प्राप्तवान्। समनुप्राप्तत्वाच्च 'अइउण्' प्रभृतीनि चतुर्दशसूत्राणि तदाधारीकृत्य च चतुः सहस्रसूत्रेषु लौकिकान्, वैदिकाँश्च सर्वानापि शब्दान् व्युत्पादयामास। महेश्वरकृपयेदं शास्त्रं पाणिनिना लब्धमिति विद्वज्जगति प्रसिद्धम्। यथोक्तम्—

शङ्करः शाङ्करीं प्रादात् दाक्षीपुत्राय धीमते।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः॥
येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।
तमश्चाज्ञानज भिन्नं तस्मै पाणिनये नमः॥

अनेनैतत् सुस्पष्टं यत्पाणिनिः महेश्वरानुकम्पया नादस्फोटात्मकं ब्रह्मस्वरूपमक्षरसमाम्नायमवाप। एतस्य शिवसूत्रसमूहस्य व्याकरणाधिकरणे प्रत्याहारसंज्ञार्थमभिप्रेतत्वेऽपि तत्रैव निहितमाध्यात्मिकं तत्त्वं शिवतत्त्वविशारदैः नन्दिकेश्वरमहोदयैः काशिकायां विवृतम्। क्रौञ्चदीपनिवासिभिः शिवभक्तैरुपमन्युनामकैराचार्यैस्तत्तत्त्वविमर्शिन्यां जटिलांशस्य व्याख्यानं कृतम्। अत्र विषये महामहोपाध्यायहरप्रसादशस्त्रिमहाशयनामविकलः शब्दराशिः समुद्ध्रियते—

Thesc alphabatical sutras are called shiva sutras especially in the school of panion for tradition has it, That he ( नन्दिकेश्वर ) Was a favarite of shiva and has got 14 sutras directly from him, But The God shiva is without action attributes. His action principle is Nandi, The son of ऋषि named शिलाद. Nandi by his autorties rose to be the commander of shiva's followers of Ganas. And rival of his son Ganesa Nandi is of the called नन्दिकेश्वर। In the present Work Nandikeswarw is made to 26 verses. Giving the highest spritual interpretation to the 14 shiva-sutras ; This is the Nandikeswar's kasika. This commentator is another great fevarite of shiva named उपमन्यु Who by his austerities rose to such

favour of siva that had to carry favours with him for obtaining a desired boon from shiva.

नन्दिकेश्वरकाशिकायां तद्व्याख्याने सूत्रस्य यादृशं विवरणमुपलभ्यते तेन व्याकरणस्याध्यात्मिकी शास्त्रता सरलतयैव सिद्धयति। आदौ 'अ इ उ ण्' इति सूत्रस्य काशिकास्थं विवरणं तदीयैरेव शब्दैः किञ्चिदुच्यते। तथाहि—

**अकारो ब्रह्मरूपस्य निर्गुणः सर्ववस्तुषु।**
**चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः॥**

अस्य श्लोकस्य व्याख्याने आचार्य उपमन्युः सुस्पष्टं व्याकरणदर्शनस्वरूपं प्रतिपादयति। तथाहि—

अः = परमेश्वरो निर्गुणः, इम् = मायामाश्रित्य, उः = व्यापकः सगुणः ईश्वरः, ण् आसीदिति सूत्रार्थः सूचितः।

सर्ववस्तुषु परा–पश्यन्ती–मध्यमा–ईम् = चित्कलामित्यत्र गायत्रीमिं चेतिवत्। चतुर्थकारिका च—

**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः।**
**आद्यन्तमन्त्येन संयोगादहमित्येव जायते॥**

आचार्य उपमन्युः एतस्याः कारिकायाः व्याख्यानं कुर्वन् ब्रूते—आदिरन्त्येन सहेता [ १।१।७१ ] इत्यादिरकारोऽन्त्यो हकारः, अकारादिहकारान्ता वर्णास्ततः परमात्मन एवाभवन्नित्यर्थः। एवमेवान्यासु सर्वासु कारिकासु तैः व्याकरणाध्यात्मिकराद्धान्तः श्रुत्यनुरूपतया प्रादर्शि। 'वागेव विश्वा भुवनानि यज्ञे' इति सूक्ष्मा वागेव विवर्तते विपरिणमते वेति बोद्धव्यम्। अत एव श्रुत्यन्तरं बहु संगच्छते—

'वाचैव विश्वं बहुरूपं निबद्धम्, तथैवैकं प्रविभज्योपभुङ्क्ते।'

वाक्यपदीयप्रथमकाण्डस्थैकविंशत्युत्तरशततमश्लोकव्याख्याने प्रमाणतया श्रुतिवाक्यमेतदर्थबोधकमुद्धरति काशिका व्याख्याकारः = 'वागेव विश्वा भुवनानि यज्ञे' इत्यादि। तदेवं व्याकरणे दर्शनस्य विचाराणामुपलभ्यमानतया व्याकरणस्य दर्शनत्वं को नाम निवारयितुं प्रभवेत्।

पाणिनिसम्प्रदाये एषा किम्वदन्ती श्रूयते—सनकादिसिद्धपुरुषानुद्धर्तुं पाणिनेः कृते व्याकरणसूत्राणि च रचयितुं ढक्कानिनादेन भगवान् शिवः प्रत्याहारसूत्राण्युपदिदेश। प्रत्याहारसूत्रस्थवर्णोपदेशप्रसङ्गे कीलहार्नमहोदयो महाभाष्यस्यैतद्[1] वचनं स्मरति—

---

१. महाभाष्यम् ( कीलहार्न ) पश्पाह्निकम्—अथ किमर्थो वर्णानामुपदेशः इति सन्दर्भः।

वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते।
तदर्थमिष्टसिद्ध्यर्थं लघ्वर्थञ्चोपदिश्यते ॥ इति ।

प्रत्याहारसूत्रानन्तरं पाणिनिः 'वृद्धिरादैच्' इति प्रथमं सूत्रं रचयामास। एतत्सूत्रव्याख्याने आचार्योऽक्षरपदं व्याचष्टे। तत्र किमिदमक्षरमिति जिज्ञासायाम् 'अक्षरं न क्षरं विद्यात्', 'अश्नोतेर्वा सरोऽक्षरम्' इति वार्त्तिके च 'न क्षीयते, न क्षरति वा तदक्षरम्' इत्यनेन शब्दस्य नित्यत्वं प्रतिपाद्य 'अथवा' इति पक्षान्तरेण अक्षरशब्दस्य व्यापकत्वरूपमर्थं संगृह्य स्फोटस्य व्यापकरूपस्य नानादेशेष्वेकदैवाभिव्यक्तिं प्रादर्शत्। एतदनन्तरमेव महाभाष्यकृत् पतञ्जलिरुपदेशविषये चिन्तयति—किमर्थमुपदेशः क्रियते, यतो वर्णानामुपदेशः पदस्य च साधुत्वान्वाख्यानमिति परस्परविरोधः समापतति।

ततः समाधानवार्त्तिके महाभाष्यकारोऽभिधत्ते—सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयेते।

एतदपि न विस्मर्तव्यं यदुपक्रमोपसंहारादिना कस्यापि ग्रन्थस्य तात्पर्यनिर्णयो भवति। पाणिनिः 'अइउण्' इत्यत्र परमेश्वरबोधकेन 'अ' इत्यनेनोपक्रमते, 'अ अ' [८।४।६८] इत्यन्तिमेन सूत्रेणोपसंहरति। उपक्रमोपसंहारयोः विषयभूतेऽर्थ एव मध्येऽभ्यासादिना ग्रन्थतात्पर्यविषयतया निर्धार्यत इति प्रसिद्धया शास्त्ररीत्या समग्रस्य पाणिनिव्याकरणस्य तत्परत्वमवधारितं भवति।

अत एव करणे क्तिन्प्रत्ययान्तवृद्धिशब्दस्य निष्पत्तिं मत्वा वर्धते विश्वमनेनेत्यर्थकस्य वृद्धिशब्दस्येश्वरपरतां विभावयता पाणिनिनादिमसूत्रे उद्देश्यविधेयभावप्रयोगनियममुल्लंघ्यापि वृद्धिशब्दमादौ प्रायुङ्क्त। वृद्धिशब्दस्येश्वरपरतयैव तस्य माङ्गलिकत्वमप्युपपद्यते। तदित्थं वृद्धिशब्दस्येमं महिमानं दृष्टिगतं विधाय पाणिनिः तेनैवेष्टशब्देन आदैचौ परिविभावयिषया 'वृद्धिरादैच्' इति प्रथमं सूत्रं निर्ममे। एवमेव पाणिनिव्याकरणस्य दार्शनिकत्वोपपादिकान्यन्यान्यपि बहूनि सूत्राणि प्राप्यन्ते, येषामुपयोगो विस्तरभयाद् त्यज्यते तेषां दार्शनिकत्वं तदर्थनिरूपणादेव निपुणमतिभिरवसेयम्।

व्याकरणस्य दर्शनात्मकतायाः प्रमुखः प्रतिष्ठापक आचार्यभर्तृहरिरेवेति सर्वेऽपि शब्दतत्त्ववेत्तारो वैयाकरणा आमनन्ति। एकत्रोऽयं महाभाष्यस्य सेतुनाम्नीं टीकां निर्माय तत्र ग्रन्थग्रन्थिविवेचने स्तुत्यं प्रयासं कृतवान्। अपरत्र च पाणिनेः, तत्परवर्तिनाञ्च ग्रन्थानवलम्ब्य व्याकरणस्य दार्शनिकतत्त्वप्रतिपिपादयिषया 'वाक्यपदीयम्' रचितवान्। वाक्यपदीयसदृशोऽन्यः कश्चन व्याकरणस्य

दार्शनिकतत्त्वप्रतिपादको ग्रन्थः व्याकरणशास्त्रे इदानीं नास्तीति निर्विवादम्। शब्द-ब्रह्मप्रतिपादनेच्छया 'अनादिनिधनं ब्रह्म' इत्युपक्रमवाक्यं विलिख्य ब्रह्मकाण्डोप-संहारे "दैवी वाग् व्यवकीर्णेयम्" इत्यनेनोभयोः वाक्ययोरेकार्थकत्वं प्रदर्शितम्। मध्ये च एतस्यैव विषयस्य पुनः पुनरभ्यासेनार्थवादेन प्रतिपाद्यविषयस्योपपत्त्या च पुष्टिः कृता। व्याकरणदर्शनसिद्धान्ते शब्दब्रह्मवादनाम्ना सर्वत्र विख्यातो विद्यते। तत्रेदमवधेयं यच्छब्दब्रह्मवादेन सह परब्रह्मवादस्य नास्ति किमपि पार्थक्यम् यतः परब्रह्मत्वेनाभ्युपगतो विवर्तवाद एव व्याकरणेऽप्यभिमतः। शब्द-तत्त्वरूपमेकमक्षरं तत्त्वं परब्रह्मवदभ्युपेतम्।

वाक्यपदीये भर्तृहरिः सुव्यक्तमाचष्टे—

[1]सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः॥

अस्याः कारिकायाः व्याख्यावसरे हेलाराजो ब्रवीति—इत्थं चात्राद्वयनये परमार्थसत्यैकत्वजातिर्महासत्ताख्या परब्रह्मस्वभावा तस्या एव गोत्वादिजाति-भेदेन विवर्त्तो व्यवहारः। एतेनैतत् स्फुटीकृतं यदद्वयमते परमार्थसत्यभूता परब्रह्म स्वभावा महासत्तैव जातिरिति। गोत्वादिजातीनां व्यवहार एव जातेः विवर्त-त्वम्। अर्थात् महासत्तैव गवाश्वादिविभिन्नसम्बन्धिप्रयुक्तोपाधिकभेदयुक्ता गोत्वाश्वत्वादिजातिरूपेण व्यवह्रियते। गोसम्बन्धीसत्तैव गोत्वजातिः, अश्व-सम्बन्धीसत्तैवाश्वत्वजातिः, एतावता समस्तजातिः परब्रह्मस्वभावा महासत्तेति सिद्ध्यति। सर्वोऽपि शब्दो जातिवाचकः इति गवादिशब्दवाचकरूपेण महा-सत्ताख्येऽक्षरे शब्दब्रह्मणि विश्रान्तिं लभते, अधिष्ठानतया अनादिनिधनत्वं व्रजतीत्यलं विस्तारेण।

## व्याकरणदर्शने वैयाकरणभूषणसारस्य स्थानम्

इदानीमुपलभ्यमानेषु व्याकरणदर्शनग्रन्थेषु शब्दार्थसाधनपरो वैयाकरण-भूषणसारो महत्तमं स्थानं बिभर्त्ति। शास्त्रप्रतिपादनरीत्या व्याकरणशास्त्रग्रन्थाः द्विधा विभजन्ते—शब्दग्रन्थाः, अर्थग्रन्थाश्चेति। शब्दग्रन्थेषु प्रकृतिप्रत्ययरूपेण पदानि प्रविभज्य लोपागमवर्णविकारादिभिः कार्यैः शब्दसिद्धिः क्रियते। अर्थग्रन्थेषु शब्दसिद्धिं मनसि कृत्वा तदनुरोधेनैवार्थानुसन्धानं क्रियते। रूपावतारप्रक्रिया-कौमुदी-सिद्धान्तकौमुद्यादयो ग्रन्थाः तत्तत्सूत्रैः शब्दसाधुत्वमुपपादयन्ति, क्रमशः पदानि, वाक्यानि च संस्कुर्वन्ति। अतस्ते शब्दग्रन्था इति पदेन व्यपदिश्यन्ते।

---

१. वाक्यपदीयम्—तृ. का. जातिसमुद्देशः—३४।

पाणिनेरष्टाध्यायी प्राधान्येन शब्दग्रन्थ एव। शब्दग्रन्थाध्ययनं विना न कोऽप्यर्थ-ज्ञाने समर्थो भवितुमर्हतीति कृत्वा तत्प्राधान्यं सुस्पष्टम्। साधुत्वसम्पन्नेषु शब्देषु कः प्रकृत्यर्थः, कश्च प्रत्ययार्थः, कस्यार्थस्य विशेषणत्वम्, कस्य च प्राधान्यम्, दर्शनान्तरीयाणां मते कः प्रकृत्यर्थः कश्च प्रत्ययार्थः, कीदृशश्च शाब्दबोधः— इत्यादयो विषया अर्थग्रन्थेषु विविच्यन्ते। तेष्वर्थग्रन्थेषु वैयाकरणभूषणसारोऽन्यतम इति विभावनीयम्।

व्याकरणदर्शनस्यारम्भः पाणिनिव्याकरणस्यारम्भादेव ततोऽपि पूर्वं वा समजायत इति पाणिनिसूत्रव्याख्यातृभिः पतञ्जलिप्रभृतिभिः तत्तद्सूत्रव्याख्यानेषु प्रादर्शि। पाणिनेः सूत्रप्रणयनानन्तरं लक्षश्लोकात्मकस्य संग्रहनामकग्रन्थस्य रचयिता व्याडिः, ततो वार्तिककारः कात्यायनः, ततश्च महाभाष्यकारः पतञ्जलिर्बभूव। इमे च सर्वे व्याकरणदर्शनसिद्धान्तान् प्रकाशयामासुः। तत्र व्याडिविरचितः संग्रहनामा ग्रन्थ इदानीं नोपलभ्यते। तदुदाहरणमेव क्वचित् क्वचित् प्राप्यते। वार्त्तिककृता कात्यायनेन व्याकरणदर्शनसिद्धान्तप्रतिपादिकानि बहूनि वार्त्तिकानि विरचितानि। तत्र 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्', 'स्वं रूपं शब्दस्याशब्दसंज्ञा, 'समर्थः पदविधिः', इत्यादिसूत्राणां व्याख्यानं कुर्वता कात्यायनेन कानिचिद् विशिष्टान्यर्थपराणि वार्त्तिकानि लिखितानि। तेषामूहापोहपूर्वकं सप्रपञ्चं व्याख्यानञ्च कृतं महाभाष्ये पतञ्जलिना। तत्र शब्दस्य स्वरूपम्, तस्य नित्यत्वम्, अर्थेन सह तस्य सम्बन्धः अर्थग्रहणकारणता-सामग्री, वृत्तयः, शब्दस्य प्रवृत्तनिमित्तम् इत्यादयो विषयाः सूक्ष्मेक्षिकया विवेचिताः।

पतञ्जलेरनन्तरं व्याकरणदर्शनस्य प्रमुखः संस्थापकः महावैयाकरणो भर्तृहरिरभूत्, येन वाक्यपदीयनामा शब्दार्थविचारपरो गभीरः, कारिकामयो महान् ग्रन्थो निरमायि। तत्र नित्यः, शब्दरूपः, स्फोटः, शब्दब्रह्मात्मना प्रतिपादितः। शब्दब्रह्मज्ञानेन कैवल्यप्राप्तिरिति वदता भर्तृहरिणा व्याकरणशास्त्रस्य दर्शनत्वं प्रतिष्ठापितम्। भर्तृहरिः ख्रिस्ताब्दसप्तमशतकस्य मध्ये बभूव इति संसाधयन्तीतिहासतत्त्वविदः।

भर्तृहरेरनन्तरं भट्टोजिदीक्षितकालपर्यन्तं काशिका—न्यास-पदमञ्जरी-रूपावतार-प्रक्रियाकौमुदीसिद्धान्तकौमुद्यादयो बहवो व्याकरणग्रन्थाः विरचिताः, किन्तु वस्तुगत्या प्राधान्येनार्थविचारपरः, व्याकरणदर्शनप्रतिपादकः कश्चन ग्रन्थो नैव निर्मितः। भट्टोजिदीक्षितः षोडशशताब्द्यां बभूव। तेन सम्पूर्णं महाभाष्यं सम्यगधीत्य भर्तृहरेः वाक्यपदीयञ्च सुसमीक्ष्य तत्र प्रतिपादितान् व्याकरणदर्शनसिद्धान्तान् संहृत्य च शब्दकौस्तुभे ग्रन्थे द्वासप्ततिकारिकाभिः स्वीयाः

सिद्धान्ताः प्रकाशिताः। तासु कारिकासु वर्णिताः सिद्धान्ता अतीवदुरूहाः, गहनाः, सारल्येनावबोद्धुमशक्या एवासन्। अत एतत् काठिन्यमपाकर्त्तु शिष्य-सुखाववबोधाय च भट्टोजिदीक्षितभ्रातुः रङ्गोजिभट्टस्य पुत्रः प्रकाण्डपण्डितः कौण्डभट्टः, कारिकाव्याख्यारूपेण वैयाकरणभूषणनामानं ग्रथं प्रणिनाय। यथा चोक्तम् —

[१]फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते॥
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये॥

वैयाकरणभूषणे यावन्तो विषयाः, सर्वेऽपि पदार्थाः, सिद्धान्ताश्च महताऽऽटोपेन विवेचिताः, तत्र व्याख्याने महान् विस्तारः सञ्जातः। तानवगन्तुं बहुकालः, बह्वायास अपेक्षित आसीदिति कृत्वा तेषां सिद्धान्तानां स्वल्पेनायासेन ज्ञानाय तत्रत्यानभिप्रायान् संक्षिप्य वैयाकरणभूषणसारं निर्ममे। वैयाकरण-भूषणसारे व्याकरणस्य सर्वेऽप्यार्थिकसिद्धान्ताः विभिन्नेषु प्रकरणेषु समाख्याताः। कौण्डभट्टः वाक्यार्थविषयकाः पदार्थसम्बद्धाः वा ये 'सिद्धान्ताः नैयायिकैः, मीमांसकैश्च दूषिताः, व्याकरणस्य दार्शनिकसिद्धान्तेषूद्भावितानां दोषाणां निराकरणपूर्वकं तेषां सुप्रतिष्ठापनमात्मकर्त्तव्यतया प्रतिजानीते। यथोक्तम् —

[२]ढुण्ढि गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्।
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये॥

वाक्यपदीये भर्तृहरिणा शब्दार्थसम्बन्धे, वृत्तिविषये, अखण्डस्फोट-सन्दर्भेऽधिकं युक्तियुतं गम्भीरं विस्तृतञ्च विवेचनमकारि। परं तत्रोपवर्णिताः विषया अतीवगभीराः रहस्यमयाश्चासन्, अतस्तत्रत्यानां विषयाणां सारल्येन सम्यगर्थावबोधाय हेलाराजप्रभृतिभिः शब्दतत्वविद्भिः वाक्यपदीयस्य टीका निर्मायि। तदानीं व्याकरणसिद्धान्तान् प्रकाशयितुं कश्चन निबन्धग्रन्थो नासीत् येन एकत्रैव सर्वेऽपि सिद्धान्ताः विजानीयुः। अतः कौण्डभट्टेनार्थसिद्धान्तव्युत्पादनाय भट्टोजिदीक्षितोक्तकारिकाव्याख्यानमुखेन वैयाकरणभूषणसारे सरलया गिरा सर्वमुदीरितम्। तत्र पूर्वपक्षोत्तरपक्षक्रमेण वर्णयन् स्वपक्षं यथायथं साधुं प्रतिष्ठापितम्।

'सर्वं नाम धातुजमाह' इति शाकटायनरीत्या कौण्डभट्टः शब्दानां धातुयोनित्वमङ्गीकृत्य धातोः प्राधान्यं मनुते। अत एव ग्रन्थादौ सर्वप्रथमं "धात्वर्थ-

---

१. वैयाकरणभूषणसारः— धात्वर्थनिर्णयः—१।
२. वैयाकरणभूषणसारः— धात्वर्थनिर्णयः—३।

निर्णयः" इति प्रकरणमुपनिबद्धम् । तत्र 'पचति' इत्यादौ 'पच्' इति धातुः, 'ति' इति प्रत्ययः । कियान् धात्वर्थः, कियाँश्च प्रत्ययार्थ इति निर्णेतुं प्रकरणमेतदारभ्यते । ततः परं 'ति' इति प्रत्ययस्थानिभूतस्य लकारस्यार्थनिर्णेतुं 'लकारार्थनिर्णयः' प्रकरणमुपन्यस्तम् । तिङन्तपदवत् सुबन्तपदेऽपि भागद्वयं विद्यते । एको नाम, अपरः सुबादिप्रत्ययरूपः । तत्र को नामार्थः कश्च सुबर्थ इति निर्णयाय क्रमेण सुबर्थनामार्थप्रकरणे उपनिबद्धे । एषु चतुर्षु प्रकरणेषु सुबन्ततिङन्तोभयपदानां व्याख्यानमुपपन्नम् । तदनन्तरं समस्तपदेष्वतिरिक्तां शक्तिं संसाध्य शक्ति-नञर्थनिपातार्थनिर्णयादिकं विवेचयता अन्ते सर्वसिद्धान्तभूतः स्फोटनिर्णयः कृतः ।

अनया रीत्या कस्मिन्नपि पदे का प्रकृतिः, कः प्रत्ययः, कः प्रकृत्यर्थः, कश्च प्रत्ययार्थः, कीदृशश्च तयोरन्वयः, वाक्यार्थे कस्यार्थस्य प्राधान्यं, कस्याप्राधान्यम्, कीदृशश्च शाब्दबोध इत्यादिकं सर्वं सुबन्ततिङन्तादिपदादौ विवेचितम् । अन्ते च सकलप्रपञ्चकारणीभूतं स्फोटं तद्भेदाँश्च साधु प्रत्यपादयत् । वैयाकरणभूषणसारे विवेचिता एते एव विषया नागेशभट्टेन वैयाकरणसिद्धान्तमञ्जूषायां लघुमञ्जूषायां परमलघुमञ्जूषायाञ्च यथायथं व्याख्याताः । कौण्डभट्टकृतवैयाकरणभूषणसारस्य वैशिष्ट्यमद्यापि पूर्ववदवतिष्ठते । अतएवायं ग्रन्थो विभिन्नेषु विश्वविद्यालयेषु पाठ्यक्रमे निर्धारितो विद्यते । प्रायः सर्वत्र व्याकरणदर्शनग्रन्थाध्ययनाऽध्यापने वैयाकरणभूषणसारस्यैव प्राधान्यमवलोक्यते ।

## वैयाकरणभूषणसारकर्त्तुरैतिह्यम्

वैयाकरणभूषणसारस्यानेकं प्रकाशनं जातम्, अनेकाश्च टीकाः, टिप्पण्यश्च प्रकाशिताः, किन्तु तत्र मया दृष्टं यत् प्रायः कस्मिन्नपि प्रकाशने ग्रन्थकर्त्तुः परिचयः, इतिवृत्तं वा न सम्यग् लिखितम् । आधुनिके हि वैज्ञानिके युगे कस्यापि ग्रन्थस्याध्ययनविधौ एषा हि स्वाभाविकी जिज्ञासा भवति—को ह्यस्य ग्रन्थस्य रचयिता, को रचनाकालः ? किं ग्रन्थकर्त्तुरैतिह्यम् ? ग्रन्थकर्त्ता कदा, कुत्र, कस्मिंश्च कुले जन्म लेभे ! को हि तस्य वंशानुक्रमः, तस्य कुलं शीलञ्च कीदृशमासीत् । ग्रन्थकर्त्ता कुत्र, कस्य च गुरोः सकाशाद् विद्यां लब्धवान् । कुत्र च तस्य कर्मभूमिरासीत् ? के च तस्य पुत्राः, शिष्याः वा अभूवन् । एषामत्यपेक्षितानां प्रश्नानां समाधानाय कश्चन प्रयत्नोऽत्र विधीयते ।

वैयाकरणभूषणसारस्य रचयिता कौण्डभट्टः पण्डितमण्डलमण्डनः न्यायमीमांसावेदान्तादिविविधविद्याविचक्षणो महान् वैयाकरणो बभूव । कुलस्यास्य

वंशवृक्षदर्शनेनैतत् ज्ञायते यदस्मिन् वंशे लक्ष्मीधरनामा कश्चन प्रकाण्डपण्डितोऽभूत्। तस्य द्वौ पुत्रावास्ताम्—

(१) रङ्गोजिभट्टः।
(१) भट्टोजिदीक्षितश्च।

कौण्डभट्टः रङ्गोजिभट्टस्य पुत्र आसीदिति तदीयेन मङ्गलश्लोकेन ज्ञायते। यथा—पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधम्।

मङ्गलश्लोकसन्दर्भे एव इदमप्युक्तम्—भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये।

श्रीभट्टोजिदीक्षितः पण्डितराजजगन्नाथस्य समकालिक आसीदितीतिहासविदां निर्णयः। पण्डितराजजगन्नाथः 'शाहजहान्' इत्याख्यस्य मुगलसम्राजः समये आसीदित्यत्रापि प्रायः समेषामिति ासविदुषामैकमत्यम्। पण्डितराजरचितं विश्रुतं पद्यमेव तत्र प्रमाणम्। यथा—

दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः॥

अतः दिल्लीश्वरस्य 'शाहजहान्' इति ख्यातस्य निकटे पण्डितराजस्य स्थितिरासीदिति सिद्धयति। तस्य राज्ञः समयः षोडशशताब्दी आसीदिति समकालिकतया भट्टोजिदीक्षितस्यापि स एव समयो निश्चेतुं शक्यते। कौण्डभट्टो भट्टोजिदीक्षितस्य भ्रातृज आसीत्। स च भट्टोजिदीक्षितविरचितशब्दकौस्तुभोक्तानामर्थानां संक्षेपेण वैयाकरणभूषणसारे व्याख्यानं कृतवान्। यथा चोक्तम्—

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते॥

अतः किञ्चित् पितृव्योत्तरवर्त्तितया कौण्डभट्टः १६ ५ ख्रिस्ताब्देऽविद्यतेति निर्धारयितुं शक्यते। अयं हि कौण्डभट्टः सर्वेश्वरेति नामधेयस्य शेषकृष्णपुत्रस्य शेषरामेश्वरस्य शिष्य आसीत्-इति वैयाकरणभूषणसारस्यान्तिमेन श्लोकेन ज्ञायते। यथा—

अशेषफलदातारमपि सर्वेश्वरं गुरुम्।
श्रीमद्भूषणसारेण भूषये शेषभूषणम्॥

श्री के० पी० त्रिवेदिना संसाधितं यत् कौण्डभट्टस्य पूर्वजा मूलतो गोदावरीतटनिवासिन आसन्। बहुकालानन्तरं ते तत आगत्य काश्यामवसन्। भट्टोजिः, रङ्गोजिः—इत्यादिशब्देषु 'जि' शब्दयोगेनैतत् प्रतीयते यदयं मूलतो महाराष्ट्रिय आसीत्। केषाञ्चिन्मतेऽयं 'सारस्वतब्राह्मणः' आसीदिति।

अस्य पूर्वजाः महाराष्ट्रप्रान्ते मन्दिरे देवपूजनोपजीविनो दीक्षितोपाधि-धारका अवर्तन्त। अस्मिन् वंशे नैके विश्वविश्रुताः पण्डिता. समभवन्। अयं कौण्डभट्टो न केवलं व्याकरणशास्त्रस्यैव पण्डितोऽपि तु न्यायमीमांसादिशास्त्रे-ष्वपि प्रकृष्टेन पाण्डित्येनालङ्कृत आसीत्। तेन हि न्यायमीमांसादिवचन-व्याख्यातॄणां स्वसिद्धान्तप्रकाशनाय च प्रतिज्ञा कृता। उक्तञ्च—

गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्।
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये॥

कौण्डभट्टो वैयाकरणभूषणसमानविषयकं ग्रन्थत्रयं लिलेख। तद्यथा—

(१) वैयाकरणभूषणम्।
(२) वैयाकरणभूषणसारः।
(३) लघुवैयाकरणभूषणसारः।

एकस्यैव ग्रन्थस्य भागत्रयात्मिका विभागपरम्पराऽन्यत्राप्यवलोक्यते। यथा नागेशभट्टेन मञ्जूषाविषये ग्रन्थत्रयमलेखि—

(१) वैयाकरणसिद्धान्तमञ्जूषा।
(२) वैयाकरणलघुसिद्धान्तमञ्जूषा।
(३) वैयाकरणपरमलघुसिद्धान्तमञ्जूषा।

एतज्जायते यदस्य वंशस्य लक्ष्मीधरनामा कश्चन पूर्वपुरुष आसीत्। तस्य द्वौ पुत्रावास्ताम्—

(१) भट्टोजिदीक्षित।
(२) रङ्गोजिभट्टः।

तस्य रङ्गोजिभट्टस्य पुत्रः कौण्डभट्टोऽभवत्। विद्यायोनिसम्बन्धाभ्यां कौण्डभट्टस्य वंशवृक्षो वक्ष्यमाणरूपेण निरूपयितुं शक्यते—

लक्ष्मीधरः [ पिता ]

रङ्गोजिभट्टः ( पुत्रः ) — कौण्डभट्टः ( पुत्रः )

भट्टोजिदीक्षितः ( पुत्रः ) — भानुदीक्षितः (वीरेश्वरः) पुत्रः — नागोजिभट्टः ( शिष्यः )

शेषकृष्णः

भट्टोजिदीक्षितः (शिष्यः)   वीरेश्वरः (पुत्रः)

पण्डितराजजगन्नाथः (शिष्यः)

कौण्डभट्टेन व्याकरणन्यायादिविषयका बहवो ग्रन्थाः विरचिताः। डॉ० आफ्रेक्तमहोदयेन 'कैटलाग्स कैटलागरम्' इति ग्रन्थेऽधोलिखिताः ग्रन्थाः कौण्डभट्टेन रचिता इति प्रतिपादितम्—

(१) तर्कप्रदीपः।
(२) तर्करत्नम्।
(३) न्यायपदार्थदीपिका।
(४) वैयाकरणसिद्धान्तभूषणसारः।
(५) वैयाकरणसिद्धान्तदीपिका।
(६) लघुवैयाकरणसिद्धान्तभूषणसारः।
(७) स्फोटवादः।

## वैयाकरणभूषणसारस्य टीकाः

वैयाकरणभूषणसारे प्रतिपादिता विषया अतीवकठिनाः, गभीराः, सामान्येन ज्ञातुमशक्याः। अत एव शब्दतत्त्वविद्भिः विद्वद्भिरस्योपरि विभिन्नाष्टीकाः विरचिताः। तासां विवरणमत्र प्रस्तूयते -

| | | |
|---|---|---|
| १. | दर्पण टीका | — पं० हरिवल्लभकृता। |
| २. | परीक्षा ,, | — पं० भैरवमिश्ररचिता। |
| ३. | कान्ति ,, | — गोपालदेवकृता। |
| ४. | काशिका ,, | — हरिशास्त्रिकृता। |
| ५. | वैयाकरणमतोन्मज्जनो | — वनमालीमिश्रकृता। |
| ६. | विवृतिः | — रुद्रनाथकृता। |
| ७. | रत्नप्रभा व्याख्या | — कृष्णमित्रकृता। |
| ८. | प्रभा | — बालकृष्णपञ्चोलिनिर्मिता। |
| ९. | शाङ्करी | - शङ्करशास्त्रिकृता। |
| १०. | सरला | — गोपालशास्त्रिनेने विरचिता |
| ११. | हिन्दी भाष्यम् | — पं० ब्रह्मदत्तद्विवेदिरचिता। |

## टीकाकाराणां परिचयः

### दर्पणकारः श्रीहरिवल्लभः

पण्डितप्रवरः श्रीहरिवल्लभो वैयाकरणभूषणसारस्य दर्पणनाम्नीं टीकां व्यरचयत्। अयं हि कूर्मगिरिनिवासी उत्प्रभातीयोपनामकश्रीवल्लभस्य पुत्र आसीत्। अनेन स्वस्याष्टोकाया अन्ते स्वयमेव लिखितम् 'इति श्रीमत्कूर्माचलाभिजनोत्प्रभातीयोपनामकश्रीवल्लभात्मजहरिवल्लभविरचिते भूषणसारदर्पणे स्फोटवादः समाप्तः'।

यतः १८५८ वैक्रमे विरचितायां काशिकायां दर्पणकारस्य बहुषु स्थलेषूद्धरणं वर्तते। अतः दर्पणकारस्य समयस्ततः पूर्वं १८०० वै० इत्यनुमातुं शक्यते। इयं टीका पण्डितसम्प्रदाये संमानिता, प्रौढा, आप्तवचनैरनुप्राणिता इत्यामनन्ति विद्वांसः।

स्वस्याष्टीकाया विषये स्वयमेव लिखति दर्पणकारः—

ज्ञात्वा श्रीफणिवाक्यजालमतुलं नैयायिकोक्तिरपि।
मीमांसानयमाकलय्य च मया सम्यक्कृते दर्पणे॥
अस्मिन् भूषणसारतां बुधजनः सोत्कण्ठमालोकतां।
या निश्वासमलीमसो न मुकुरस्तत्त्वार्थबोधक्षमः॥
आसीत् कूर्मगिरौ धरासुरवरः श्रीवल्लभः कोविदो।
वेदान्तेषु विनोदमञ्जिरिरिति ख्याताऽस्ति यन्निर्मितिः॥
तत्सूनुर्हरिवल्लभः समकरोत् सद्युक्तिमण्युज्वलं।
श्रीमद्भूषणसारदर्पणमिमम्मोदय विद्यावताम्॥

### परीक्षाटीकाकारः श्रीभैरवमिश्रः

पण्डितप्रवरस्य श्रीभैरवमिश्रस्य समयो निःसंशयं सर्वैरपि विद्वद्भिः वै० १८५०--१९०० निश्चीयते। श्रीभैरवमिश्रेण न केवलं वैयाकरणभूषणसारस्य परीक्षानाम्नी टीका लिखिता, अपि तु शब्देन्दुशेखरे, परिभाषेन्दुशेखरे मनोरमाशब्दरत्ने च प्रखरपाण्डित्यपूर्णा च टीका रचिता। श्रीमिश्रेण लघुशब्देन्दुशेखरस्य चन्द्रकलाटोकायां तस्याः लेखनसमयोऽङ्कितः। उक्तञ्च—

शश्यष्टसिद्धिचन्द्राख्ये मन्मथे शुभवत्सरे।
माघे मास्यासिते पक्षे मूले कामतिथौ शुभा॥
पूर्णा वारे दिनमणेरियञ्चन्द्रकलाभिधा।
शब्देन्दुशेखरव्याख्या भैरवेण यथामति॥

अस्यायमभिप्रायो यत् १८८१ वैक्रमे वर्षे माघकृष्णपक्षे मूलनक्षत्रे कामतिथौ

रविवासरे लघुशब्देन्दुशेखरस्य 'चन्द्रकला' नाम्नी व्याख्या पूर्णतां गता। इत्थं ह्युपरिनिर्दिष्टसमयो युक्तिसङ्गत इति प्रतीयते।

### 'कान्ति' व्याख्याकारः श्रीमन्नुदेवः

'मन्नुदेवः' वैयाकरणभूषणसारस्य 'कान्ति' नाम्नीं व्याख्यामलिखत्। अयं हि वैद्यनाथपायगुण्डेमहोदयस्य शिष्य आसीत्। अस्य समयः १८४० वैक्रमाब्दो भवितुमर्हतीति निश्चिन्वन्तीतिहासविदः। अस्य विदुषो जीवनेतिवृत्तिविषये इतोऽधकं किञ्चिन्नैव ज्ञायते।

### 'काशिका' टीकाकारः श्रीहरिशास्त्री

श्रीहरिशास्त्री वैयाकरणभूषणसारस्य 'काशिका' नाम्नीं टीकां निर्मिमे। इयं हि टीका १८१४ वैक्रमाब्दे मार्गशीर्षमासस्य पूर्णिमायां चन्द्रवासरे पूर्णतामगमत्। अयं हि हरिशास्त्री केशवदीक्षितस्य पुत्र आसीत्। श्रीहरिशास्त्रिणो नाम हरिरामदीक्षित आसीत्। आत्मपरिचयविषये ग्रन्थान्ते श्रीदीक्षितः स्वयमेदीवोद्गिरति—

योऽभूत् पण्डितमण्डलीपरिणतः श्रोताब्धिसारङ्गता,
आप्तो वेदविदां वरः परिवृढैर्भूमेः सदा वन्दितः।
श्रीमद्भैरवशाङ्करोपदरजः सेवाप्तपूर्णार्थकः,
श्रीमत् केशवदीक्षितः समभवत् तस्यात्मजोऽभूद्धरिः॥

रामान्तः शिवपालिते शिवपुरे श्रींकाशिशब्दाभिधे,
तेनैयं खलु निर्मिता कृतिवरा श्रीभूषणे काशिका।
श्रीमद्भैरवपादसेवनवपुः श्रीकण्ठपादेऽर्पिता,
मोदं सन्तनुतां सदाप्तविदुषां सद्युक्तिभाजां चिरम्॥

धनराजानुजः श्रीमान् सखीदेव्यास्तु गर्भजः।
व्याख्याञ्चक्रे भूषणस्य यथामति शिवाप्तये॥
युगभूतदिगीशात्मसंमिते वत्सरे गते।
मार्गशीर्षशुक्लपक्षे पौर्णमास्यां विधोर्दिने॥
रोहिणीस्थे चन्द्रमसि वृश्चिकस्थे दिवाकरे।
समाप्तिमगमत् ग्रन्थस्तेन तुष्यतु नः शिवः॥

### विवृतिकारो रुद्रनाथः

रुद्रनाथो वैयाकरणभूषणसारे विवृतिनाम्नीं व्याख्यामलिखत्-इति युधिष्ठिरमीमांसकेन स्वीये संस्कृतव्याकरणशास्त्रस्येतिहासे लिखितम्। एतद्विषये किञ्चिदधिकं नैव ज्ञायते।

### रत्नप्रभाकर्त्ता कृष्णमित्रः

कृष्णमित्रः भूषणसारे 'रत्नप्रभा' नाम्नीं व्याख्यां प्राणैषीत्। अनेन शब्दकौस्तुभे 'भावप्रदीप'नाम्नीं व्याख्याऽपि रचिता। अयं हि उत्तरप्रदेशस्य सुल्तानपुरजनपदे लक्ष्मणपुरनिवासिनः पण्डितश्रीरामसेवकत्रिपाठिनः पुत्र आसीत्। अनेनैव लघुमञ्जूषोपरि कुञ्जिका, कौमुद्यां रत्नार्णवः प्रौढमनोरमायाञ्च कल्पलता टीका विनिर्मिता। अयं नागेशभट्टसमकालिकोऽभूत्। अतोऽस्य समयः १७५० वै० निश्चेतुं शक्यते।

### 'प्रभा' टीकाकर्त्ता बालकृष्णपञ्चोली

पञ्चोलीत्युपाख्येन बालकृष्णशर्मविदुषा वैयाकरणभूषणसारस्य 'प्रभा' नाम्नो टीका रचिता। एतावती विस्तृता, गभीरा, पाण्डित्यपूर्णा च काचिदन्या टीका नाभूत्। एते खलु विश्वविश्रुतपण्डितानां श्रीसभापतिशर्मोपाध्यायानां शिष्या आसन्। एते गुर्जरप्रान्तस्य 'बड़ौदा' राज्ये 'वसाई' ग्रामनिवासिनः श्रीनीलकण्ठस्य पुत्राः बभूवुः। टीकायाः प्रारम्भे एतैरात्मपरिचयो विस्तरेणोपन्यस्तः। 'प्रभा' टीका २०४० वै० वर्षे प्राकाश्यमुपगता।

श्रीपञ्चोलिमहोदयाः प्रथमं काश्यां खेतानसंस्कृतमहाविद्यालये प्रधानाध्यापका आसन्, तदनु काशिकराजकीयसंस्कृतमहाविद्यालये, वाराणसेयसंस्कृत विश्वविद्यालये च व्याकरणप्राध्यापकपदेऽधिष्ठिताः जाताः। ततोऽवकाशं प्राप्य इदानीं ते गुजरप्रान्तस्य 'अहमदाबाद' इत्याख्ये नगरे स्वभवने निवसन्ति।

### शाङ्करी टीकाकारः श्रीशङ्करशास्त्री

श्रीरङ्गभट्टपुत्रेण शङ्करशास्त्रिणा १९५१ खिस्ताब्दे 'शाङ्करी' नाम्नी भूषणसारस्य टीका रचिता। इयं टीका सुविस्तृता, सारल्येनावबोद्धुं शक्या, पाण्डित्यपूर्णा सन्दर्भसंयोजिता चेत्यवगम्यते। पुण्यपत्तनस्यानन्दाश्रममुद्रणालये १९५७ खिस्ताब्दे इयं टीका प्रकाशिता जाता। अयं हि गुरुपरम्परया अर्थग्रन्थसिद्धान्तान् सम्यक् विचार्य तदुपयोगं च कृत्वाऽत्यन्तपरिश्रमपूर्वकमिमां टीकां लिखितवान्।

भारद्वाजकुलेऽस्य जन्म आसीत्। अस्य पिता रङ्गभट्टः माता च रमेति नाम्ना ख्याता आसीत्। मीमांसापण्डितः श्रीनरहरिरस्य ज्यायान् भ्राता आसीत्, यो हि 'विद्याशंकरभारती' इति नाम्ना जगद्गुरुपदे आरूढ आसीत्।

### सरला टीकाकारो गोपालशास्त्रिनेने

२००० वैक्रमाब्दे गोपालशास्त्रिनेने-नामकेन महापण्डितेन रचितेयं टीका। सा चेयं टीकाऽन्वर्थतया अतीवसरला, संक्षिप्ता, विद्वज्जनमनोहारिणी चाव-

लोक्यते। 'गोपालशास्त्रि' नेने—महोदयाः काश्यां लब्धप्रतिष्ठाः व्याकरणशास्त्रे कृतश्रमाः, विद्वांस आसन्। द्वित्रिवर्षेभ्यः प्रागेते काश्यां शिवसायुज्यं प्राप्ता इति।

## 'हिन्दी' भाष्यकारः पण्डित ब्रह्मदत्तद्विवेदी

२०१२ वैक्रमाब्दे पण्डितवरेण ब्रह्मदत्तद्विवेदिना वैयाकरणभूषणसारस्य 'हिन्दी' भाष्यं कृतम्। इदं भाष्यमतीवविस्तृतं सुस्पष्टमल्पधियामपि बोधगम्यं सर्वथाऽपूर्वञ्च विद्यते। इतः पूर्वं वैयाकरणभूषणसारस्य प्रमाणभूता काचिद् 'हिन्दी' व्याख्या नाभूत्। पं० ब्रह्मदत्तद्विवेदिनो महामहोपाध्यायानां पण्डित-श्रीहरिहरकृपालुमहोदयानां पुत्राः आसन्। व्याकरणन्याय-वेदान्तसाहित्यादिषु शास्त्रेष्वेतेषां वैदुष्यं ख्यातमिति जना अवगच्छन्ति। एते खलु प्रयागजनपदे 'पण्डितपुर' ग्रामवासिनः आसन्। पितृचरणयोरेतैः सर्वा अपि विद्याऽधीता। एतेषां कर्मभूमिः विहारप्रान्तस्य 'पटना' इति महानगरी आसीत्। तत्रैव एते श्रीराम-निरञ्जनसंस्कृतमहाविद्यालये बहुकालं प्रधानाध्यापकपदे ससम्मानमधिष्ठिता आसन्। ऐषम एते काश्यां निवसन्तः स्वनिपुणमतिभिः नागेशभट्टकृतशब्देन्दु-शेखरस्य सन्ध्यन्तभागस्य 'हिन्दी' व्याख्यां विधाय शिवसायुज्यमवाप्नुयुः।



## केषाञ्चित् प्रकरणानां सारांशः

### अथ धात्वर्थनिर्णयः

वैयाकरणभूषणसारकारः कौण्डभट्टो ग्रन्थादौ सर्वप्रथमं धात्वर्थनिरूपणं कृतवान्। तत्र धात्वर्थनिरूपणस्य प्राथम्ये को हेतुरिति जिज्ञासा विदुषां मनांस्यान्दोलयति। अत्रैतदवधेयं यत् सर्वेषां शब्दानां धातुयोनित्वमामनन्ति शब्दतत्वविदः। वैयाकरणसिद्धान्तनिष्णातेष्वन्यतमः शाकटायनोऽभिवदति—सर्वं नाम धातुजमाह। अतो निखिलशब्दव्युत्पादने धातुरेव मूलाधार इति फलति। अत एव ग्रन्थकर्त्रा प्रथमतो धात्वर्थनिरूपणं कृतम्। तत्र धात्वर्थप्रतिपादिकाः द्वाविंशतिकारिकाः प्रकरणेऽस्मिन् विस्तरेण प्रपञ्चिताः। यद्यपि लोके प्रकृतिप्रत्ययादिसमुदितस्य 'पचति' इत्यादिवाक्यस्यैव व्यवहारो भवति तस्यैवार्थबोधश्च जायते, तथापि कियान्नर्थः प्रकृतेः, कियाँश्च प्रत्ययस्येति निर्णयाय धात्वर्थविवेचनं नूनमपेक्षितम्।

तत्र वैयाकरणानां मते फलव्यापारौ धातुवाच्यौ। तयोर्मध्ये फलजनकत्वात् व्यापारः प्रधानम्। फलाश्रयः कर्म, व्यापाराश्रयः कर्त्ता च तिङर्थः। इममेवाभिप्रायमभिवदति कौण्डभट्टो वैयाकरणभूषणसारे—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥

अत्र फलव्यापारयोरिति द्विवचननिर्देशेन फले, व्यापारे च धातोः पृथक् शक्तिरिति सिद्धयति। न तु फलावच्छिन्नव्यापारे एका शक्तिः। विशिष्टशक्तिस्वीकारे 'तण्डुलं पचती' त्यादौ तण्डुलस्य, 'चैत्रेण तण्डुलः पच्यत' इत्यादौ व्यापारे चैत्रस्य चान्वयो न स्यात, 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने' ति नियमात्। अत एकवृन्तगतफलद्वयन्यायेन फले व्यापारे च धातोः पृथक् शक्तिरिति सिद्धयति।

नागेशभट्टास्तु फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले वा धातोः शक्तिं मन्यन्ते। फले, व्यापारे च धातोः पृथक् शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकबोधस्य चाऽपत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः। विशिष्टवाचकत्वे तु पृथगुपस्थितेरसत्वान्न दोषः।

धातोः फले, व्यापारे च पृथक् शक्तिस्वीकारे फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितेः, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितेः कारणमिति कार्यकारणभावद्वयकल्पनम्, धातोर्बोधजनकत्वशक्तिद्वयकल्पनञ्चेत्यतिगौरवम्। तस्मात् फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च धातोः शक्तिः।

वस्तुतस्तु फले व्यापारे च धातोः खण्डशः शक्तिरिति प्राचीनमतमेव ज्यायः। उद्देश्यविधेयभावेनान्वयनियामकव्युत्पत्तौ धातुभिन्नत्वनिवेशेनादोषः। व्यापारविशेष्यकबोधं प्रति कर्तृप्रत्ययसमभिव्याहारश्च कारणमितिकार्यकारणभावद्वयकल्पनमपि नापेक्षितम्, एकवृन्तगतफलद्वयन्यायेन फलव्यापारयोरुभयोरपि पर्यायेण विशेष्यत्वं विशेषणत्वञ्चोपपाद्यमिति।

यद्यपि लोके यदुद्देश्येन धात्वर्थक्रियायां प्रवृत्तिस्तत्फलमिति मन्यते तथाप्यत्र पारिभाषिकं फलत्वं गृह्यते। अत एव मूले उक्तम्--फलं = विक्लित्त्यादि। विक्लित्तिः=रूपान्तरम्, अवयवसंयोगविशेषस्तद्विभागविशेषश्च। पारिभाषिकफलत्वञ्च—कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे च सति तद्धात्वर्थत्वम्। 'तण्डुलं पचति' इत्यत्र पच्धात्वर्थफूत्कारादिव्यापारजन्यत्वे सति तादृशव्यापारनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वं पच्धात्वर्थे विक्लित्तौ वर्तत इति कृत्वा लक्षणसमन्वयः। अत्र 'कर्तृप्रत्ययसमभिव्याहारे' इत्युपलक्षणं न तु विशेषणम्। तेन कर्तृप्रत्ययसमभिव्याहारे यस्यार्थस्य फलत्वम्, कर्मप्रत्ययसमभिव्याहारेऽपि तस्यैवार्थस्य फलत्वं भवतीति विभावनीयम्।

व्यापारं परिभाषयन्नाह ग्रन्थकारः—व्यापारस्तु भावनाऽभिधा साध्यत्वेनाभिधीयमाना क्रिया। व्यापारलक्षणन्त्वेवं कल्पयितुं शक्यते—धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्। तथा च पचतीत्यादौ फूत्कारादेः विक्लित्त्यादिधात्वर्थफलजनकत्वाद्धातुवाच्यत्वाच्च व्यापारत्वम्। एवं फलानुकूलो व्यापारो धात्वर्थो ज्ञेयः। किं करोतीति प्रश्ने यथा पचतीत्युत्तरं भवति, एवमस्तीत्युत्तराभावादस्त्यादीनां क्रियावाचकत्वं न संभवतीति तु न शङ्क्यम्, अस्य फलानुकूलव्यापारस्यैव क्रियाशब्देन व्यपदिष्टत्वात्। अग्रेऽपि ग्रन्थकृता व्यापारस्यैव क्रियात्वमुपपादितम्। उक्तञ्च—

**[१]व्यापारो भावना सैवोत्पादना सैव च क्रिया।**

तथा च भावनाऽभिधापरपर्याया साध्यत्वेनाभिधीयमाना क्रिया व्यापार

---

१. वै. भू. सा. धात्वर्थनिर्णय का. १

इत्यर्थः। साध्यत्वञ्च—क्रियान्तराकांक्षानुत्थापकतावच्छेदकरूपत्वम्। पचतीत्युक्ते क्रियान्तराकाङ्क्षा नोदेति। अतोऽत्रत्या क्रिया साध्यक्रियेति। 'पाकः' इत्युक्ते भवति, अभूत्, भविष्यति वेत्याद्याकाङ्क्षा जायते। अतोऽत्र न साध्यक्रिया, अपि तु सिद्धा क्रियेति ज्ञेयम्।

अनन्यलभ्यो हि शब्दार्थो भवतीति नियमेन फलस्य, व्यापारस्य च धातुलभ्यत्वात् फलाश्रयः कर्म, व्यापाराश्रयश्च कर्त्ता आख्यातार्थं इति निश्चीयते। वैयाकरणमते व्यापारमुख्यविशेष्यकः शाब्दबोधो भवति। तस्मिन्, व्यापारे फलं तिङर्थश्च विशेषणत्वेनाऽन्वेति। अतः 'चैत्रस्तण्डुलं पचति' इत्यस्य 'तण्डुलाभिन्नाश्रयनिष्ठक्लित्त्यनुकूलो वर्तमानकालिक एकत्वविशिष्टश्चैत्राभिन्नाश्रयवृत्तिर्व्यापारः इति शाब्दबोधो भवति। प्राचीनवैयाकरणानां मते "चैत्रेण तण्डुलः पच्यते" इति वाक्यतोऽपि स एवार्थबोधो भवति। नव्यमते तु कर्तृप्रत्ययस्थले पूर्वोक्त एव शाब्दबोधो भवति, न तु व्यापारमुख्यविशेष्यकः। तेन 'चैत्रेण तण्डुलः पच्यते' इत्यत्र एकत्वविशिष्टचैत्राभिन्नाश्रयवृत्तिवर्तमानकालिकव्यापारजन्यतण्डुलाभिन्नाश्रयनिष्ठा विक्लितिरिति शाब्दबोधो जायते।

नैयायिकानां मते फलव्यापारौ धात्वर्थः, कृतिराख्यातार्थः अनुकूलत्वमाश्रयत्वञ्च संसर्गविधयाऽऽभास्यौ. प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः। तेन 'पचति देवदत्तः' इत्यतो विक्लित्यनुकूलव्यापारानुकूलकृतिमान् एकत्वविशिष्टो देवदत्त इत्यर्थबोध उपपद्यते। कर्मप्रत्ययस्थले च फलविशेष्यक अर्थबोधो जायते। तेन 'चैत्रेण तण्डुलः पच्यते इत्यत्र 'एकत्वविशिष्टकृतिमच्चैत्रनिष्ठव्यापारजन्यविक्लित्याश्रयस्तण्डुलः' इति बोधः सम्पद्यते।

मीमांसकानां मते फलं धात्वर्थः, व्यापार आख्यातार्थः, कर्त्ता चाक्षेपलभ्यः तथा 'देवदत्तः पचति' इत्यतः देवदत्ताभिन्नैककर्तृकविक्लित्यनुकूलव्यापारः इत्याख्यातार्थमुख्यविशेष्यकः बोध उपपद्यते।

तदेतद् मतद्वयमपि वैयाकरणेभ्यो न रोचते। अतः कौण्डभट्टेन स्वसाधकयुक्तिभिरेतन्निराकृतम्।

नैयायिकरीत्या कृतेराख्यातार्थत्वे 'रथो गच्छति' "तण्डुलः पच्यते स्वयमेव" इत्यत्र रथादावचेतने कृतेरभावात् तृतीयाऽऽपत्तिर्दुर्वारा। अपि चाख्यातस्य कृतिवाचकत्वे क्वचित् कर्त्तुरभिधानं क्वचित् कर्मणोऽभिधानमिति या व्यवस्था सा सर्वथोच्छिन्ना स्यात्।

नैयायिकानां प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधोऽपि न युक्तियुक्तः। तेषां मते आख्यातार्थसंख्यायाः प्रथमान्तार्थेऽन्वयो भवति। तथा चाख्यातार्थ

संख्यायाः प्रथमान्तार्थेऽन्वयो भवति। अपि चाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावो वाच्यः। तथा सति चन्द्र इव मुखं दृश्यते, भुक्त्वा व्रजति मैत्रः—इत्यत्र चन्द्रस्य, क्त्वान्तार्थभोजनस्य प्रथमान्तार्थत्वेन तत्र दृश्यते, व्रजतीत्याख्यातार्थसंख्यायाः प्रकारतयाऽन्वय आपपति। तद्वारणाय प्रथमान्तपदजन्योपस्थितावितरविशेषणत्वघटितविशेषणं दातव्यं भवति तत्त्वतीव गौरवास्पदम्।

अपि च 'देवदत्तः पचति' इत्यादौ कर्त्तुस्तिङ्प्रत्ययार्थत्वेन प्राधान्यात्तस्य देवदत्तादिभिः सममभेदान्वयात् प्रथमान्तार्थस्यापि देवदत्तादेः प्राधान्यापत्तौ 'पश्य, मृगो धावति' इत्यत्र मृगकर्तृकधावनकर्मकं दर्शनमित्येवं रूपं भाष्यकृत्-दर्शितमेकवाक्यत्वं न संगच्छेत्। तत्र 'मृगो धावति' इत्यतो धावनानुकूलकृतिमान् मृग इति बोधो जायते। 'पश्य' इति वाक्याच्च तत्कर्मकदर्शनाश्रयस्त्वमितिबोधः। तेनात्र एकार्थमुख्यविशेष्यको बोधो नोपपद्यते। अत्र हि पश्येति दर्शनक्रियायां मृगस्य कर्मतयाऽन्वयो न संभवति, किन्तु 'तम्' इति स्वतन्त्रं कर्माध्याहार्यम्। तथा च 'यो मृगो धावति' इति वाक्यप्रयोगः संभवति। तथा सति 'मृगो धावति' इत्येकं वाक्यम्, तं पश्य इति द्वितीयं वाक्यमिति वाक्यभेदरूपगौरवमापततीत्यर्थः। 'पश्य, मृगो धावति इति वाक्यान्मृगनिष्ठोत्कटधावनकर्मकं दर्शनमित्येकवाक्यतया बोधस्य सर्वानुभवसिद्धत्वात् दृशिक्रियायां कर्मतासम्बन्धेन मृगनिष्ठोत्कटधावनस्यैवान्वयः प्रतिपादयितुमभीष्टः। स च व्यापारमुख्यविशेष्यकबोधवादिनां वैयाकरणानां मते सामाञ्जस्येनोपपद्यते।

यद्यपि "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति नियमेन पचतीत्यादौ तिङर्थस्य कर्त्रादेरेव प्राधान्यमिति लभ्यते तथापि 'भावप्रधानमाख्यातं सत्वप्रधानानि' नामानि इति निरुक्तभूवादिसूत्रस्थभाष्यात् धात्वर्थभावनायाः प्रत्ययार्थापेक्षया प्राधान्यं निश्चीयते। प्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' [१।२।५६] इति सूत्रेणाप्येतत् प्रतिपाद्यते यत् प्रत्ययार्थस्य प्राधान्यमिति न सार्वत्रिकम्, लोकत एवार्थावगतेः। यैरपि व्याकरणं न श्रुतम् तेऽपि 'राजपुरुषमानय' इत्युक्ते राजविशिष्टं पुरुषमानयन्ति न राजानं नापि पुरुषमात्रम्। यश्च लोकतोऽर्थः सिद्धः किं तत्र यत्नेन।

मण्डनमिश्रादिमीमांसकैः व्यापारस्य प्राधान्यमङ्गीकृतम्, परं प्रत्ययार्थस्य प्राधान्यसंरक्षणाय व्यापारस्याख्यातार्थत्वमेव स्वीकृतम्। प्रभाकरादिमीमांसकमते भावना न धातुवाच्या, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति न्यायेन तस्या अप्राधान्यापत्तेः, अपि च सा प्रत्ययवाच्यैव इत्यपि न युक्तम्, 'पचति' पाकमुत्पादयति, पाकानुकूला भावना उत्पादनेति विवरणात् विव्रियमाणस्य विवरण-

समानार्थकत्वेन धातोर्भावनावाचकत्वं सिद्ध्यति। अपि च भावनायाः प्रत्ययार्थत्वे फलमात्रं धात्वर्थ इति फलति। तथा च 'घटं भावयति' इत्यत्रेव 'घटो भवति' इत्यत्रापि धात्वर्थोत्पत्तिरूपफलाश्रयत्वेन घटस्य कर्मतापत्तौ द्वितीयाऽऽपत्तेः।

न चात्र घटस्य कर्तृत्वेन तस्योत्पत्तिरूपफलाश्रयत्वेऽपि परया कर्तृसंज्ञया कर्मसंज्ञायाः बाधान्न द्वितीयेति वाच्यम्. धात्वर्थानुकूलव्यापाराश्रयत्वस्य कारकमात्रे सत्वेन सर्वेषां कर्तृत्वापत्तेः, क्रियाजनकस्यैव कारकत्वात्। वैयाकरणानां तु धातूपात्तव्यापाश्रयस्य कर्तृत्वान्न दोषः।

वैयाकरणसिद्धान्ते यत्र शक्तिः सूत्रकारेण साधिता, तत्परित्यागे हेतुं न विद्मः। पाणिनिना 'लः कर्मणि च भावे चाऽकर्मकेभ्यः' [३।४।६९] इति सूत्रे 'कर्त्तरि कृत्' [३।४।६७] इति सूत्रात् कर्त्तरीत्यनुकृष्य कर्त्तरि लकारशक्तिः कण्ठरवेणोक्ता, तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि, कर्त्तरि च विधीयन्ते।

'शक्तिग्रहं व्याकरणोपमानम्' इत्यादिरीत्या शक्तिग्राहकेषु व्याकरणस्य प्राधान्यमिति सर्वैरप्यङ्गीकृतम्। अतो न साधुत्वमात्रार्थकं व्याकरणम्. अपि तु अर्थविशेषपुरस्कारेणैव साधुत्वसम्पादकम्।

वैयाकरणमते आख्यातस्य कृतिवाचकत्वं न संभाव्यते। तथाहि—आख्यातस्य कृतिवाचकत्वे क्वचित् कर्त्तुरभिधानम् क्वचित् कर्मणोऽभिधानमिति या व्यवस्था, तस्याः सर्वथा उच्छेद एव स्यात्।

फलांशस्यावाचकत्वे व्यापार एव धात्वर्थः स्यात्। तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिसकर्मकत्वोच्छेदापत्तिः। विशेषविवरणं विस्तरभयान्नेह तन्यते।



## अथ लकारार्थनिर्णयः

टित्ङिद्भेदेन लकाराः द्विधा विभजन्ते। तेषु टिल्लकाराः षट्-लट्, लिट्, लुट्, लेट् लोट् लृट्। ङित् लकाराःचत्वारः लङ्, लिङ् लुङ्, लृङ्। लडादिलकाराणां टकारानुबन्धसहकृताकारेकाराधनुबन्धक्रमः, लङादीनां तु ङकारानुबन्धसहकृताकारेणाकाराद्यनुबन्धक्रम एव नियामक इति।

### टिल्लकाराणामर्थविवेचनम्

तेषु लट्लकारो वर्त्तमानेऽर्थे, लिट् परोक्षे, लुट् श्वो भाविनि, लृट् भविष्यति सामान्ये लेट्विध्यादौ, लोट् प्रार्थनादौ च भवति। उक्तञ्च—

**वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेयाः लडादयः॥**

'वर्त्तमाने लट्' [३।२।१२३] इति सूत्रेण वर्त्तमानक्रियावृत्तेर्धातोर्लट् भवति। तत्र वर्त्तमानत्वं किमिति जिज्ञासायामाह ग्रन्थकारः—प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम्। प्रारब्धापरिसमाप्तक्रियोपलक्षितकाल इत्यर्थः। वर्त्तमानस्य कालगतत्वेन सर्वानुभवसिद्धत्वात्। 'आत्माऽस्ति' 'पर्वताः सन्ति' इत्यादावात्मधारणानुकूलव्यापारस्य नित्यतया प्रारब्धापरिसमाप्तत्वाभावेन वर्त्तमानत्वस्यासम्भवाल्लट् प्रयोगानुपपत्तिरित्यत आह—तत्तत् कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम्। उक्तं हि महाभाष्ये इह भूतभविष्यद् वर्त्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्।

**परतो भिद्यते सर्वमात्मा तु न विकल्पते।**
**पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते॥**

### लिट्

'परोक्षे लिट्' [३।२।११५] इति सूत्रेण भूतानद्यतनकालवृत्ती या परोक्षाक्रिया तद्वाचकाद्धातोर्लिडित्यर्थः।

अक्ष्णः परं परोक्षम्। अश्नुते व्याप्नोति विषयान् अनेनेत्यक्षि। ज्ञानेन्द्रियमात्रं न तु चक्षुरेव, शुश्राव सस्मारेत्यादि दर्शनात्। एवञ्चात्राक्षिशब्दस्य इन्द्रि

यमात्रपर्यायतयाऽक्षणोऽदर्शनादित्यच् । 'परोक्षे लिट्' इति सूत्रे निपातनात् परशब्दस्य परोभावे 'एङः पदान्तादति' [६।१।१०९] इति पूर्वरूपे चेदं सिद्धयति। उक्तं महाभाष्ये -

परो भावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।
उत्वं वादेः परादक्षणः सिद्धं वास्मिन्निपातनात् ॥

ननु सर्वाऽपि क्रिया परोक्षैव भवति। तथा ह्युक्तं महाभाष्ये-

'क्रिया नामेयत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्' इति भाष्यात् तस्या अतीन्द्रियत्वेन परोक्षे इति निरर्थकमिति चेन्न, पिण्डीभूतस्य निदर्शयितुमशक्यत्वेऽपि' साक्षात्करोमीति प्रतीतिविषयत्व-सम्भवात्। अन्यथा 'पश्य, मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यादिति। ग्रन्थकृता च 'साक्षात्करोमि' इत्येतादृशविषयताशलिज्ञानाविषयत्वम् परोक्षत्वम्' इत्युक्तं। तत्र ज्ञानञ्च प्रयोक्तृनिष्ठत्वेन विवक्षितम्। ततश्च प्रयोक्तुरिन्द्रिया-गोचरत्वं परोक्षत्वमित्येव फलितम्।

## लुट्

'अनद्यतने लुट्' [३।३।१५] इति सूत्रेण लुड् विधीयते, अत्र भविष्यति गम्यादयः [३।३।३] इत्यतो भविष्यतीत्यनुवर्तते। धातोः [३।१।९१] इत्यधिकृतम्। भविष्यत्यद्यतन इत्यस्य धात्वर्थक्रियायामन्वयः। तेन भविष्यदनद्यतनकालवृत्तिर्या क्रिया तद्वाचकाद्धातोर्लुडित्यर्थः। 'अनद्यतने' इत्यत्र 'न विद्यतेऽद्यतनो यस्मिन्निति बहुव्रीहिर्न तु तत्पुरुषः सूत्रवृत्तौ भाष्यादौ च तथैव व्याख्यानात्। भविष्यत्वञ्च – वर्तमानप्रागभावप्रतियोगिक्रियाश्रयत्वम्। उदाहरणम् --श्वो भविता।

## लृट्

'लृट् शेषे च' [३।३।१३] इत्यनेन भविष्यति सामान्येऽर्थे लृड्विधीयते। यथा—घटो भविष्यति इत्यादि। भविष्यत्वञ्च वर्तमानप्रागभावप्रतियोगिसमयो-त्पत्तिमत्त्वम्।

## लेट्

'लिङर्थे लेट्' [३।४।७] विधिनिमन्त्रणादिलिङर्थे लेड् विधीयते। अयं लकारश्छन्दस्येव भवतीति ज्ञेयम्।

## लोट्

आशिषि लिङ्लोटौ [३।३।१७३], लोट् च [३।३।१६२] इति सूत्राभ्यां विध्याशिषयोरर्थयोलोड् विधीयते। यथा—भवतु ते प्रसादः।

## ङिल्लकाराणामर्थविचारः

लङ्, लिङ् (आशीः,) लिङ् (विधिः) लुङ्, लृङ् इति पञ्च ङिल्लकाराः सन्ति। तेषु लङ्लुङौ भूतेऽर्थे भवतः। तत्र 'अनद्यतने लङ्, [३।२।१११] इत्यनेनानद्यतनभूतेऽर्थे वर्त्तमानाद्धाधोर्लङ् भवति। यथा—अस्य पुत्रोऽभवत्। तस्य च वर्त्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिरेतत्सम्बन्धिपुत्रकर्तृकोत्पत्त्यनुकूलो व्यापार इत्यर्थः। लुङ् [३।२।११०] इति सूत्रेण भूतसामान्ये लुङ् विधीयते। अत्र वर्त्तमानध्वंसप्रतियोगित्वं भूतत्वम्। तच्च क्रियायां निरवधिमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगो भवति।

"लिङ् निमित्ते लृङ् क्रियातिपत्तौ" [३।३।१२] इति सूत्रेण क्रियाया अनिष्पत्तौ गम्यमानायां भूते भविष्यति च काले हेतुहेतुमद्भावादिं लिङ्निमित्तें सति लृङ्लकारो भवति। तदुदाहरणं यथा--

सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्।
अत्र सुवृष्टिभवनं सुभिक्षभवनस्य हेतुः॥

## लिङ्

लिङ्लकारो द्विविधः विधिलिङ् आशीर्लिङ् चेति। तत्र "विधिनिमन्त्रणाऽऽमन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" [३।३।१६१] इति सूत्रेण विध्याद्यर्थेषु धातोर्विधिलिङ् विधीयते। अत्रादिपदेन निमन्त्रणाऽऽमन्त्रणाधीष्टास्त्रयो गृह्यन्ते। एषु चतुर्ष्वनुस्यूतं प्रवर्तनात्वं ग्राह्यम्। उक्तञ्च वाक्यपदीये—

अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥

प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। तच्चेष्टसाधनत्वस्याप्यस्तीति तदेव विध्यर्थः। ङिल्लकाराणामर्थो यथाक्रममाह —

ह्यो भूते प्रेरणादौ च भूतमात्रे लङादयः।
सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ्स्मृतः॥

वस्तुतस्त्वयमर्थनिर्देश उपलक्षणम्, 'लट् स्मे' [३।२।११८] 'स्मे लोट्' [३।३।१६५] इत्यादिना भूतेऽपि प्राप्तकाले च लट्लोटादेर्दर्शनात्। प्रसिद्धत्ववर्त्तमानत्वाद्यर्थे लडादेः शक्तिः अन्यत्रार्थे लडादेर्लक्षणेति तु दर्शनान्तररीत्योक्तम्। वैयाकरणमते तु सर्वस्मिन्नुक्तेऽर्थे लडादेः शक्तिरेव, न तु लक्षणेति बोध्य इति।



## अथ नामार्थनिर्णयः

वैयाकरणभूषणसारकारेण 'सुप्तिङन्तचयो वाक्यम्' इति वाक्यलक्षणमनुसृत्य सुबन्ततिङन्तयोरर्थनिरूपणाय यत्नोऽत्राभ्यूहितः। तत्र सकलनाम्न आधारभूतस्य धातोरर्थनिरूपणं सर्वप्रथमं प्रत्यपादि। तदनन्तरमाख्यातार्थनिर्णयाय लकारार्थप्रकरणमुपनिबद्धम्। ततः परं सुबन्तार्थविवेचनक्रमे यथावसरं नामार्थं निरूपयन्नाह कौण्डभट्टः

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥

एकम्=जातिः, द्विकम्=जातिव्यक्ती, त्रिकम्=जातिव्यक्तिलिङ्गानि। तत्र सत्त्वरजस्तमो गुणानां साम्यावस्था नपुंसकत्वम्, सत्त्वादिगुणानामाधिक्यं पुंस्त्वम्. तेषामेव सत्त्वादिगुणानामपचयः स्त्रीत्वम्।

चतुष्कम्=संख्यासहितं त्रिकम्। पञ्चकम्=कारकसहितं पञ्चकमिति।

अत्र जातिपदेन तत्तत्पदार्थगतसाधारणधर्मो विवक्षितो न तु नित्यत्वे सत्यनेकसमवेतत्वरूपाजातिरङ्गीक्रियते। असाधारणत्वं तु तत्पदार्थेतरावृत्तित्वे सति तत्पदार्थमात्रवृत्तित्वम्। तेनाकशात्वाभावत्वादीनामनेकसमवेतत्वरूपजातित्वाभावेऽपि नाव्याप्तिः। अयं हि तत्तत्पदार्थसाधारणधर्मः शास्त्रे स्वार्थशब्देनाभिधीयते। जातेः शब्दशक्यत्वे 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् सिद्धम्'। इति 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' [१।२।५८] इति सूत्रस्थं वार्त्तिकं प्रमाणम्। तथा च सरूपसूत्रे स्थितं 'आकृतिं वाजप्यायनः' इति वाक्यञ्च प्रमाणम्।

अयं हि जातिशक्तिवादो मीमांसकाऽभिमतः। लाघवाज्जातौ शब्दानां शक्तिः स्वीकार्येति तेषामभिप्रायः। यत्तु व्यवहारे व्यक्तावेव शब्दानां शक्तिदर्शनात् तत्रैव शक्तिरिति तु न, व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्।

अनन्तरं जातिशक्तिवादे काँश्चिद्दोषानुद्भाव्य व्यक्तिशक्तिवादपक्षं साधयन्नाह—यद्वा केवलव्यक्तिरेव एकशब्दार्थः। अत्र केवलपदेन जातिशक्तिपक्षः निराक्रियते। तन्मते व्यक्तावेव शक्तिर्न नु जातिविशिष्टव्यक्तावित्यभिप्रायः। एषश्च केवलव्यक्तिपक्षः सरूपसूत्रसम्मत इति। यद्यप्युपचयापचयशब्दार्थाः परस्परं विरुद्धाः, तेषां परस्परविरुद्धधर्माणामेकत्र समावेशो न भवति। तेन तटस्तटीतटमिति लिङ्गत्रयमनुपपन्नं स्यात्। किञ्च सर्वविकाररहिते ब्राह्मणि उपचयापचयासंभवात् 'आत्मा ब्रह्म' इत्युत पुंस्त्वनपुंसकत्वयुक्तव्यवहारानुपपत्तिरत्र स्यात्।

अत एव मूले ग्रन्थकृतोक्तम्—तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यञ्च। तमेव विरुद्धधर्ममादाय तटादिशब्दाः भिद्यन्ते। स्त्रीपुंस्त्वादिधर्माः परस्परं विरुद्धाः, तेषामेकत्रावस्थानासंभवः। अतो धर्मभेदाच्छब्दभेदो भवति। यथा—एक एव अकारोकारादयो वर्णाः ह्रस्वत्वदीर्घत्वादिभेदेन भिद्यन्ते तथैव समानानुपूर्वीकास्तटादिशब्दाः भिन्नाः भवन्ति। तेन पुल्लिङ्गस्तटशब्दो भिन्नः, स्त्रीलिङ्गस्तटशब्दोऽन्यः, नपुंसकलिङ्गस्तटशब्दो भिन्न इत्येवं शब्दभेदान्न दोषः। अत एव मूले उक्तम्—केषाञ्चिदनेकलिङ्गव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात्।

## चतुष्कम्

चतुर्णां समूहः। जाति-व्यक्ति-लिङ्ग-सङ्ख्या—इति चत्वारो नामार्थ इति केषाञ्चिन्मतम्।

## पञ्चकम्

पञ्चानां समूहः। कर्त्रादिकारकसहितं जाति व्यक्ति-लिङ्ग-सङ्ख्या-प्रातिपदिकार्थं इत्यपि केषाञ्चिन्मतम्। टाबादिस्त्रीत्वबोधकप्रत्ययसमभिव्याहारे अजा-अश्वादिशब्दात् स्त्रीत्वस्य प्रतीतिर्जायते। टाबाद्यभावे स्त्रीत्वप्रतीतिर्नजायते। एवं प्रतीत्यप्रतीतिरूपाभ्यामन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव प्रतीतिर्जायते। किन्तु प्रत्ययवर्जिते 'दधि पश्य' इत्यादौ प्रत्ययज्ञानाऽभावेऽपि क्लीबत्वैकत्वोभयविशिष्टदधिकर्मकं दर्शनमित्यनुभवसिद्धतया संख्येत्यादीनां प्रकृत्यर्थत्वमेवसिद्धयति। अन्यथाऽनुभवविरोधः स्पष्ट एव। किञ्च शास्त्रेण प्रकृतेरेव लिङ्गमुपदिष्टं वर्तते। अतो लिङ्गसंख्यादयः प्रकृतेरेव वाच्या न तु प्रत्ययस्येति।

## षोढा

षोढा प्रातिपदिकार्थ इति कौण्डभट्टादीनां मतम्। एतेषां मते शब्दोऽपि शाब्दबोधे भासते। अतः सोऽपि प्रातिपदिकार्थः। तन्मते न किमपि ज्ञानं शब्दविरहितं भवति। उक्तञ्च वाक्यपदीये—

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**

एषोऽभिप्रायो यत् सर्वमपि ज्ञानं शब्दरूपविशेषणेनानुविद्धमेव भवति। नास्ति किमप्येतादृशं ज्ञानं यच्छब्दशून्यं भवेत्। यत्र च प्रत्यक्षज्ञानं जायते शब्दार्थयोस्तादात्म्यादारोपितं शब्दज्ञानमस्त्येव। शब्दार्थयोस्तादात्म्यं तु - अर्थं कथयति, अर्थं शृणोतीत्यादिप्रयोगानुसारेणानुभवसिद्धम्। 'विष्णुमुच्चारय'

इत्यादौ विष्णुपदात् स्वार्थद्रव्यलिङ्गाद्यर्थवद्विष्णुशब्दस्याप्युपस्थितिर्यदि न स्यात्तद्यर्थोच्चारणासंभवेन वाक्यार्थबोधो न स्यात्। अतः शब्दार्थवत् स्ववाचकशब्दस्याप्युपस्थितिर्भवतीति मन्तव्यम्। शब्दस्य प्रातिपदिकार्थत्वमनङ्गीकृत्य यदि तस्योपस्थितिः लक्षणया स्वीक्रियते तदपि न साधु। लक्षणा द्विविधा—निरूढा, प्रयोजनवती च। निरूढा लक्षणा तु शक्यत्यनतिरिक्तैव भवति। यथाऽस्य शब्दस्यैतस्मिन्नर्थे शक्तिरित्यनादितात्पर्यवशाद् बुद्धचते तथा निरूढलक्षणाऽप्यनादितात्पर्यग्रहाधीनेत्यर्थः। यदि शब्दो न प्रातिपदिकार्थस्तर्हि विष्णुपदवाच्यो विष्णुशब्दो नैव भवितुमर्हति। एवं सति निरूढलक्षणयाऽपि न निर्वाहः सम्भवति। किञ्च, विष्णुपदस्य विष्णुशब्दे लक्षणायां प्रयोजनाभावात् प्रयोजनवती लक्षणाऽपि न सम्भवति।

यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोऽपि प्रातिपदिकार्थः। यदि न भेदविवक्षा तदा श्रोत्रादिभिरुपस्थितोऽप्यर्थवद् भासते। अयमभिप्रायः—अनुकरणानुकार्ययोरभेदपक्षे स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय यथा शाब्दबोधे शब्दस्य भानं तद्वद् घटमानयेत्यादौ घटादिपदानामपि श्रोत्रेण स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय भानस्यावर्जनीयतया सर्वत्रैव शाब्दबोधे शब्दविषयता सिद्धचति।

अनया रीत्या शब्दस्यापि प्रातिपदिकार्थत्वं सिद्धचति। शब्दे वाचकत्वं वाच्यत्वञ्चेत्युभयं सिद्धचति। उक्तञ्च वाक्यपदीये—

> ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
> तथैव सर्वशब्दानामेते पृथगवस्थिते।
> विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।

अयमभिप्रायो यत् यथा लोके दीपादिरूपतेजसि विषयसन्निधाने शक्तिद्वयं दृष्टम्, विषयासन्निधाने तु तेजसि ग्राह्यत्वमेव। एवं सर्वेषां शब्दानामर्थबोधे ग्राह्यत्वग्राहकत्वरूपे द्वे शक्ती स्तः। एते 'पृथगवस्थिते' इत्यनेन तयोरसमनियतत्वं प्रदर्शयति। एवमर्थगोचरशब्दनिष्ठशक्तिसहकृत एव शब्दोऽर्थस्य स्वस्वरूपस्य च प्रत्यक्षं जनयति। शब्दैः स्वात्मनो ज्ञानविषयत्वमसंप्राप्य नार्थो बोध्यते, किन्त्वात्मनो ज्ञानविषयत्वं संपाद्यैव शब्दैरर्थो बोध्यते। एवं शब्दनिष्ठबोधकतानिरूपितबोध्यतायाः शब्दाश्रयकत्वं शास्त्रकृत् संमतमिति तात्पर्यम्।



## अथ सुबर्थनिर्णयः

धात्वर्थलकारार्थप्रकरणयोः क्रमशः तिङन्तपदव्याख्यानानन्तरं सुबन्तपद-विवेचनक्रमे भट्टोजिदीक्षितनिर्मितां कारिकामाश्रित्य सुबर्थो निरूपितः। तत्र कस्याः विभक्तेः कोऽर्थं इति जिज्ञासायामुक्तं कौण्डभट्टेन - द्वितीयातृतीयासप्त-मीनामाश्रयोऽर्थः। तत्र आश्रयेत्यस्याश्रयतावानित्यर्थः। आश्रयता चात्र न किञ्चिद् धर्मावच्छिन्ना विवक्षिता। यद्यपि 'कर्मणि द्वितीया' [२।३।२] 'कर्तृकरण-योस्तृतीया' [२।३।१८] इत्याद्यनुशासनाद् द्वितीयादीनां कर्मकरणाद्यर्थकत्वं लभ्यते तथापि कर्त्तुरीप्सिततममित्यनेन क्रियाजन्यफलाश्रयस्यैव कर्मसंज्ञा विधीयते। तत्र क्रियाफलयोर्धातुलभ्यत्वादाश्रयमात्रं द्वितीयार्थं इति फलति। आश्रयत्वञ्च फलाश्रयत्वम्। 'ओदनं पचति' इत्यत्र विक्लित्याश्रयत्वम्, घटं करोतीत्यत्र उत्पत्त्याश्रयत्वम्, घटं जानातीत्यत्र क्रियाजन्यावरणभङ्गाश्रयत्वं संभवति, अती-तादेराश्रयता न संभाव्यते, परं यथानुभवं नैयायिकैरतीतादिघटादेर्विषयतया ज्ञानाश्रयताङ्गीकृता, तथाऽस्माभिरपि अतीतादिघटे विषयतयाऽऽवरणभङ्गाश्रयता स्वीक्रियते। अथवा सत्कार्यवादसिद्धान्तमाश्रित्याश्रयताऽङ्गीक्रियते। एतच्च समर्थितं कारिकया। उक्तञ्च तत्र—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते॥

द्वितीयार्थश्च परमतखण्डनपुरस्सरं महताऽऽटोपेन शब्दतत्वविचक्षणैराचार्यैः साधुप्रतिपादितः।

अयं हि द्वितीयार्थं ईप्सिततमानीप्सितभेदेन द्विविधः। तत्रेप्सिततमं त्रिवि-धम्—निर्वर्त्यम्, विकार्यं प्राप्यञ्चेति। अनीप्सितञ्च चतुर्विधम्—औदासीन्येन प्राप्यम् = तृणादि। कर्त्तुरनीप्सितम् = द्वेष्यं विषादि, संज्ञान्तरैरनाख्यातम् = अपादानादिसंज्ञाभिरविवक्षितम्, अकथितञ्चेति सूत्रविहितं कर्म, अन्यपूर्वकम् = अन्यसंज्ञाप्राप्तौ सत्यां कर्मसंज्ञकम्। यथा—क्रूरमभिक्रुध्यतीत्यत्र प्राप्तां संप्रदान-संज्ञां बाधित्वा 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति सूत्रविहितं कर्मसंज्ञकं भवती-त्युक्तम्। उक्तञ्च वाक्यपदीये—

निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम्॥
औदासीन्येन च यत्प्राप्यं यच्च कर्त्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चान्यपूर्वकम्॥

विस्तरस्तु सावित्रीव्याख्यायां निर्दिष्टस्तत एवावगन्तव्य इति।

कर्तृतृतीयाया आश्रयमात्रमेवार्थः। 'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' इति हरिवचनात् यन्निष्ठा व्यापारात्मिका क्रिया धातुनोक्ता तत्कारकं कर्त्तेति धात्वर्थव्यापाराश्रयत्वं कर्तृत्वमिति। व्यापारस्य च धातुना प्रतिपाद्यमानत्वादनन्यलभ्यो हि शब्दार्थो भवतीति न्यायादाश्रयमात्रमेव तृतीयार्थः। तृतीयार्थत्वेनोक्त कर्त्ता त्रिविधः—शुद्धः, प्रयोजको हेतु, कर्मकर्त्ता च। तत्र कर्तृत्वसामान्यधर्मपुरस्कारेण भेदकथनमेतत्। हेतुकर्तृकर्महेतुभ्यां भिन्नः कर्त्ता शुद्धः। णिजर्थव्यापाराश्रयः कर्त्ता प्रयोजककर्त्ता. णिच्प्रकृतिभूतधातूपात्तव्यापाराश्रयत्वे सति णिजर्थव्यापारजन्यफलाश्रयः प्रयोज्यकर्त्ता। यो ह्यण्यन्तावस्थायां कर्तृसंज्ञः सण्यन्तावस्थायां कर्मसंज्ञको भवति स कर्मकर्त्ता। एतेषामुदाहरणानि सम्यङ् निरूपितानि भूषणसार इति पुनरुक्तभिया विरम्यते।

करणतृतीयाया व्यापारविशिष्टाश्रयो वाच्यो भवति, यतः फलनिष्पत्त्यव्यवहितपूर्ववर्त्ती यो व्यापारस्तद्विशिष्टं यत्कारणं तदेव करणमिति व्यापाराश्रययोः करणतृतीया शक्यत्वे 'साधकतमं करणम्' [१।४।४२] इति सूत्रमेव प्रमाणम्। भर्तृहरिणाप्युक्तम्—

> क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
> विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥
> वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।
> स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः।

सप्तमी

'आधारोऽधिकरणम्' इति सूत्रादाधारस्य सप्तम्यर्थत्वलाभादाधारस्य चाश्रयादनतिरिक्तत्वमिति सप्तम्या अप्याश्रयोऽर्थः। 'कारके' इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्यर्थः। एवं कस्याधारो ग्राह्य इत्याकांक्षायामुपस्थितत्वात् क्रियाया एवाधारो लभ्यते। तत्र क्रिया तदाश्रययोर्मध्ये क्रियाया धातुनैव लाभादनन्यलभ्यः केवल आश्रयांश एव सप्तम्याः शक्योऽर्थः। साक्षात्क्रियाधारयोः पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिकं सूत्रमनर्थकं सत् कर्तृकर्मद्वारा धात्वर्थक्रियाश्रयस्याधिकरणसंज्ञां विदधाति। तेन स्थाल्यां पचति, कटे शेते—इत्यादौ क्रियाश्रयत्वेनाधिकरणसप्तम्याः प्रयोगा उपपद्यन्ते। भर्तृहरिणापि वाक्यपदीये उक्तम्—

> कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।
> उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥

एतच्चाधिकरणं त्रिप्रकारकम्—औपश्लेषिकं वैषयिकमभिव्यापकञ्च।

क्रमेणोदाहरणानि यथा—कटे शेते, मोक्षे इच्छास्ति, तिलेषु तैलम्। एतच्च संहितायाम् [६। ।७२] इति सूत्रे भाष्ये स्पष्टम्।

पञ्चमी

अवधिः पञ्चम्यर्थः। 'अपादाने पञ्चमी' [२।३।२८] इति सूत्रेणापादानेऽर्थे पञ्चम्याः विधानात् कथमवधिः पञ्चम्यर्थ इत्याकांक्षायामुच्यते—'ध्रुवमपायेऽपादानम्' [१।४।२४] इति सूत्रादपायो विश्लेषस्तज्जनकक्रिया तत्रावधिभूतमपादानसंज्ञकं भवतीत्यनेनावधेः पञ्चम्यर्थत्वं सिद्ध्यति। एतत्समर्थितञ्च हरिणा वाक्यपदीये -

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥

तच्चापादानं त्रिविधम्—

(१) निर्दिष्टविषयम्।
(२) उपात्तविषयम्।
(३) अपेक्षितक्रियञ्चेति।

तदुक्तं वाक्यपदीये—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते ॥

तत्र विभागजनकव्यापारार्थत्वेन प्रसिद्धेन पतति गच्छतीत्यादिना साक्षात् अर्थात् विभागजनकक्रियाध्याहारं विनैव गतिर्निर्दिश्यते=विभागजनिका क्रिया उपस्थाप्यते तदपादानं निर्दिष्टविषयमित्यर्थः। यथा—अश्वात् पतति। अत्र विभागजनकक्रियाध्याहारं विनैव 'पत्' धातुर्विभागजनिकां क्रियामुपस्थापयति।

समभिव्याहृतधातुनोपात्तो लक्षितो गतिरूपो विषयो यत्र तन्निर्दिष्टविषयमपादानमित्यर्थः। अयमभिप्रायो यद्विभागनिरूपको धात्वन्तरार्थो विशेषणं यस्य तादृशं स्वार्थं धातुर्ब्रूते तदुपात्तविषयमपादानमिति। यथा - बलाहकाद् विद्योतते। बलाहकावधिकं यन्निःसरणं तदनन्तरकालिकं विद्युत्कर्तृकं विद्योतनमित्यर्थः। अत्र निःसरणरूपो यः धात्वर्थं रसोऽङ्गभूतो यस्य एतादृशो यो विद्योतनरूपोऽर्थस्तं 'वि' पूर्वकद्युत् धातुः प्रतिपादयति, स्वाव्यवहितोत्तरत्वसम्बन्धेन निःसरणविशिष्टे विद्योतने द्युतिर्वर्तते।

अपेक्षितक्रियम् अपेक्षिता विभागजनिका क्रिया यत्र तदपेक्षितक्रियमपा-

दानमित्यर्थः। यथा कुतो भवान्? अत्र कुत्र इति पञ्चमी दृश्यते। सा च क्रियाविशेषज्ञानं विना निराकांक्षार्थप्रतिपादिका। अत्र प्रश्नोत्तररूपे द्वेऽपि वाक्ये अपेक्षितक्रियेति। वाक्येऽस्मिन्नागमनमर्थमध्याहृत्यान्वयः कर्त्तव्यः। कुतो भवान्? इत्यस्य किं देशावधिकविभागजनकागमनव्यापारवान् भवान् इत्यर्थः। पाटलिपुत्रावधिकविभागजनकागमनव्यापारवानित्यर्थः। एतेन गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिकेति सिद्ध्यति।

## चतुर्थी

उद्देश्यश्चतुर्थ्यर्थः। अत्र 'चतुर्थी संप्रदाने' [२।३।१३] इति सूत्रं मानम्।

न च सम्प्रदानस्य चतुर्थ्यर्थत्वसिद्धावपि उद्देश्यस्य चतुर्थ्यर्थत्वं न संभवतीति शङ्कायामाह ग्रन्थकारः -तच्च 'कर्मणा यमभिप्रैति स संप्रदानम्' [१।४।३२] इति सूत्रात् कर्मणा करणभूतेन यमभिप्रैति =ईप्सति तत्कारकं सम्प्रदानमित्यर्थकादुद्देश्यस्य चतुर्थ्यर्थत्वं सिद्ध्यति। एवञ्च यत्किञ्चिद्धातूपात्तव्यापारजन्यफलाश्रयरूपकर्मसम्बन्धाय क्रियायां यदुद्देश्यं तत्संप्रदानमित्यर्थादुद्देश्यस्य चतुर्थ्यर्थत्वं फलति।

सम्प्रदानमिति महासंज्ञा। तेन सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञा विहिता। सम्यक्दानञ्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वोत्पत्त्यनुकूलव्यापारः 'दा' धात्वर्थरूपः। अत एव 'रजकाय वस्त्रं ददाति' इत्यादौ निरुक्तधात्वर्थत्वाभावाद् 'रजकस्य वस्त्रं ददाति' इत्येवं सम्बन्धसामान्ये षष्ठ्येव भवतीति वृत्तिकाराः। परन्तु भाष्यकारः "खण्डिकोपाध्याय. शिष्याय चपेटां ददाति' इति वाक्यं प्रयुङ्क्ते। एतावता स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनरूपो 'दा' धात्वर्थ इति स्वीकारे तथा प्रयोगो न संभाव्यते। अतो भाष्यप्रयोगप्रामाण्यमङ्गीकृत्य यदि संयोगविशेषानुकूलव्यापारार्थकत्वेन मुख्यदानार्थक 'दा' धातुयोगे एव सम्प्रदानमिति स्वीक्रियते तदा "खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति प्रयोगस्यानुपपत्तिः।

अतो नाऽन्वर्थसंज्ञा, किन्तु सम्प्रदानमिति महासंज्ञा प्राचामनुरोधेन। तेन यत्किञ्चिद्धातूपात्तव्यापारजन्यफलाश्रयरूपकर्मणा संबन्धुमभिप्रेयमाणोऽर्थं सम्प्रदानमित्यर्थाश्रयणात् रजकाय वस्त्रं ददाति, शिष्याय चपेटां ददाति इत्यादयः प्रयोगाः सिद्ध्यन्ति।

'रजकस्य वस्त्रं ददाति इति प्रयोगस्तु सम्बन्धसामान्ये षष्ठीमाश्रित्योपपादनीय इति।

सम्प्रदानञ्च त्रिविधम् अनिराकरणहेतुकम्, प्रेरणाहेतुकम्, अनुमतिहेतुकञ्च। स्वस्वत्वनिवृतीच्छाधीनपरस्वत्वोत्पत्तीच्छारूपस्त्यागः 'दा' धात्वर्थं इत्यङ्गीकृत्य अनिराकरणहेतुकं सम्प्रदानं भवति। अत्र प्रवृत्तिनिवृत्त्यनकूलव्यापारशून्यत्वमनिराकरणहेतुकं भवति। यथा सूर्यायार्घ्यं ददाति। अत्र सूर्योऽर्घ्यं-प्रदातारमर्घ्यप्रदानान्ननिवारयति। प्रेरणाहेतुकं सम्प्रदानम्--'विप्राय गां ददाति' इति। अत्र विप्रेण मह्यं देहीति प्रवर्त्तितः गां ददाति विप्राय। प्रेरणा चात्र कर्तृनिष्ठदानादिविषयकेष्टसाधनत्वबोधानुकूलव्यापारः। अनुमितिहेतुकञ्च सम्प्रदानम्, यथा - उपाध्यायाय गां ददाति इति। अत्र उपाध्यायो गोप्रदानं न प्रार्थयते न वा निराकरोति, अपि तु दीयमानं गोप्रदानमनुमन्यते। अनुमितिश्च 'इमां गां तुभ्यं दातुमिच्छामि' इति परोक्तार्थस्य यत्स्वीकरणं तदनुकूलो व्यापारः—दीयतां प्रतिग्रहीष्यामीति शब्दप्रयोगरूपः। षष्ठ्यास्तु सम्बन्धमात्रमर्थः। स च सम्बन्धः क्वचित् सम्बन्धसामान्यरूपेण वाच्यः। यथा– मातुः स्मरतीत्यादौ। क्वचित्तु विशेषरूपेण वाच्यः।

'कारकषष्ठ्यास्तु शक्तिरेवेत्यूह्यम् इति कौण्डभट्टेनोक्तम्। अर्थात् 'कर्तृकर्मणोः कृति' [२।३।६८] इति सूत्रविहितषष्ठ्यास्तु तत्तत्कारकत्वशक्तिरित्यर्थः। 'सप्तमीपञ्चम्यौ कारकमध्ये'' इति कारकशब्दः कर्तृत्वादिशक्तिपरः, न तु कर्त्रादिपर इति भाष्ये व्याख्यानात्।



# अथ समासशक्तिनिर्णयः

यस्मिन् समुदाये पदद्वयं पदत्रयं वा परस्परं समस्यते स समुदायः समास इति। कैश्चिदाचार्यैरुक्तम् समसनं समासः संक्षेप इति यावत्। महर्षिपाणिनिना समासं परिभाषयितुं सुस्पष्टतया किमपि सूत्रं नोक्तम् तथापि 'समर्थः पदविधिः' [२।१।१] इति सूत्रेण समर्थस्य पदविधित्वमूहितम्। विग्रहवाक्यार्थाभिधाने यः शक्तः सः समासः। पदानां विधिः पदविधिः। स च समासादिरिति। सामर्थ्यञ्च द्विविधम् —

(१) व्यपेक्षालक्षणम्।

(२) एकार्थीभावलक्षणञ्च।

अत्र वार्त्तिककारः[१] पृथगर्थानामेकार्थीभावः समर्थवचनम् परस्परव्यपेक्षासामर्थ्यमेके।

व्यपेक्षालक्षणमेकार्थीभावलक्षणञ्च सामर्थ्यं परिभाषयन्नाह [२]तत्त्वबोधिनीकारः— तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात् परस्परसम्बन्धः सा व्यपेक्षा। यथा राज्ञः पुरुष इत्यादिवाक्ये। अस्मिन् पक्षे प्रत्येकं पदं परस्परं साकांक्षं भवति। अत एवोक्तं कैयटेन[३]— परस्पराकांक्षा रूपा व्यपेक्षा।

एकार्थीभावस्तु—राजपुरुष इत्यादिवृत्तावेव। पृथगर्थानामेकार्थीभाव इति भाष्यप्रदीपे उक्तम्। स चैकार्थीभावः प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः। विग्रहवाक्ये तत्तत्पदैः पृथक्तया प्रतिपाद्य राजाद्यर्थाः पृथगर्थाः समासे पुनस्त एवार्था एकार्थतां लभन्ते। अत एव तदेव यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयत्वेन लोकदृष्टानामर्थानां विशिष्टविषयैकशक्त्यधीनोपस्थितिविषयत्वमेवैकार्थीभाव इति फलति।

शाब्दिकाः समासप्रयोजनप्रदर्शनप्रसङ्गे ब्रुवते ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च समासप्रयोजनमिति। सारस्वतसम्प्रदायानुसारं समासघटकपदसमूहः सत्यपि विभक्तिलोपे विभक्त्यर्थं न परित्यजति। तथा च सार्थकपदराशेरेकपदाभाव एव समासः। अत एव सारस्वतव्याकरणे उक्तम —

---

१. महाभाष्यम्—२।१।१।

२. वैयाकरणसिद्धान्तकौमुदी — अव्ययीभावः (तत्त्वबोधिनी) पृ. २०३।

३. महाभाष्यप्रदीपः—२।१।१।

**विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते।**
**ऐकपद्यं पदानाञ्च स समासोऽभिधीयते॥**

इत्थं हि परस्परान्वययोग्यार्थकपदानामेष समासो भवति। अतो 'वृद्धस्य वचनं ग्राह्यम्' इत्यत्र वृद्धेन सह वचनस्यान्वयात् पदद्वये समासो भवितुमर्हति, परं ग्राह्यमिति पदेनान्वयाभावान्न भवति समासः। उक्तञ्च भाष्यकृता—'सापेक्षमसमर्थं भवतीति'[1]। यत्रासामर्थ्यं तत्र समासादिवृत्तिर्न संभाव्यते। यथा—'ऋद्धस्य राजपुरुषः' इत्यत्र समासाघटकऋद्धपदार्थेन सहान्वीयार्थकतया राजपदस्याशामर्थ्येन तस्य मातङ्गपदेन सह समासस्यासाधुत्वेन 'ऋद्धस्य राजमातङ्गाः' इति प्रयोगः साधुर्न भवति, किन्तु नित्यसाकांक्षपदस्य समासाघटकपदार्थेन सहान्वितार्थकत्वेऽपि पदान्तरेण समासो भवत्येव। यथा—'चैत्रस्य गुरुकुलमिति'।

केचित्तु उक्तवाक्येषु चैत्रादिपदार्थानां समुदायार्थेन सहान्वयं मत्वा गुरुप्रभृतिपदानां सामर्थ्यं रक्षन्तः, गुरुकुलादिपदैः समासं समर्थयन्ति। यथोक्तं वाक्यपदीये—

**समुदायेन सम्बन्धो येषां गुरुकुलादिना।**
**संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह॥**

तथाचायं हि समासः षड्प्रकारको भवतीति साधितं कौण्डभट्टेन। उक्तञ्च—

**सुपां सुपा तिङां नाम्ना धातुनाऽथ तिङां तिङा।**
**सुबन्तेनेति ज्ञेयः समासः षड्विधो बुधैः॥**

एतद्विवरणं सोदाहरणं यथाक्रममुपस्थाप्यते—

(१) सुपां सुपा- सुबन्तस्य सुबन्तेन सह समासः। यथा—'राजपुरुषः' इति। अत्र राज्ञ इति सुबन्तस्य पुरुष इति सुबन्तेन सह समासः।

(२) सुपां तिङा--सुबन्तस्य तिङन्तेन सह समासः। यथा—'पर्यभूषयत्', 'अनुव्यचलत्'। अत्र 'परि' इति सुबन्तस्य, अभूषयत् इति तिङन्तेन सह समासः।

(३) सुपां नाम्ना-सुबन्तस्य नाम्ना सह समासः। यथा—'कुम्भकारः'। अत्र 'कुम्भम्' इति सुबन्तस्य 'कार' इति नाम्ना समासः। अत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया 'कार' इति प्रातिपदिकात् सुबुत्पत्तेःपूर्वं समासो भवति।

---

१. महा०—समर्थःपदविधिः—२।१।१।

(४) सुपां धातुना—सुबन्तस्य धातुना सह समासः। यथा—'कटप्रूः'। कटं प्रवते इति विग्रहः। 'कटम्' इति सुबन्तस्य गत्यर्थकप्रूङ्धातुना सह समासः। अत्र 'कर्त्तरि क्विप्' इति सूत्रेण क्विब्विधानेन प्रयोगः सिद्ध्यति।

(५) तिङां तिङा—अत्र तिङन्तस्य तिङन्तेन सह समासः। यथा—'पिबतखादता पचतभृज्जतेत्यादिः'। पिबतखादतेति सततं यस्यां क्रियाया-मभिधत्ते, सा पिबतखादतेत्यर्थः।

(६) तिङां सुपा—अत्र तिङन्तस्य सुबन्तेन सह समासः। यथा—'जहिस्तम्बः'। अत्र जहीत्येतत् तिङन्तम्, स्तम्बेति सुबन्तेन सह समासः।

समासशक्तौ ग्रन्थकारेण वैयाकरणभूषणसारे तत्पुरुषादिसमासानां लक्षण-निरूपणप्रसङ्गे 'पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः' इत्यादि-लक्षणस्यातिव्याप्त्यव्याप्तादिदोषेण दूषितत्वात् तेषां लक्षणानां प्रायिकत्वमूहितम्।

इयं समासवृत्तिः जहत्स्वार्थाऽजहत्स्वार्थेति भेदेन द्विविधा। अनयोः वृत्त्योः क्रमश एकार्थीभावव्यपेक्षारूपयोः पर्यवसानं लभ्यते।

जहत्स्वार्था जहति स्वानि वृत्तिघटकपदानि यमर्थं स जहत्स्वः, तादृशोऽर्थो यस्यां सा जहत्स्वार्था। स्वशब्दोऽत्रार्थात्मीयपरः। अर्थस्यात्मीयञ्च पदमेव। तथा च जहत्स्वार्थत्वमेव व्यपेक्षा। 'राजपुरुषः' इत्यादौ समासशक्त्यैव राज-विशिष्टपुरुषभानसंभवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम्, वृषभया-वकादिपदेषु वृषादिपदानामिव।

अजहत्स्वार्था—न जहति पदानि स्वार्थं यस्यां साऽजहत्स्वार्था। अस्मिन् पक्षे कल्पकाभावात् राजपुरुषादौ नातिरिक्ता शक्तिः कल्प्यते। अवश्यक्लृप्त-प्रत्येकावयवशक्त्यैव बोधनिर्वाहे पुनः समुदाये शक्तिकल्पनस्य गौरवेण निरस्त-त्वमित्यर्थः। अयमेव व्यपेक्षापक्षो भाष्यकारेण समर्थसूत्रे संसाधितः।

जहत्स्वार्थाऽजहत्स्वार्थरूपे इमे द्वे अपि वृत्ती भेदः, संसर्गः, उभयञ्चेति भेदेन त्रिविधे। यथोक्तम्—

> **जहत्स्वार्थाऽजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।**
> **भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः[१]॥**

तत्र भेदोऽन्योन्याभावः। तथा 'राजपुरुषः' इत्यादावराजकीयभिन्नपुरुष इति बोधः। यद्यत्र भेदो वाच्यो न स्यात्तदा 'राजपुरुषः सुन्दरः' इत्यस्य यो राज-स्वामिकः पुरुष स देवदत्तस्वामिकोऽपीति बोधः स्यात्।

---

१. वै० भू० सा०—समासशक्तिनिर्णयः – ३।

वस्तुतो 'राजपुरुषः' इत्यनेन प्रथमतो राजसम्बन्धवान् इत्येव शाब्दं भानं भवति। 'अराजकीयभिन्नः इत्यादिभेदस्तूत्तरकालमुपतिष्ठते। अतः प्रथमोपस्थितरूपान्तरङ्गत्वात् संसर्ग एव वाच्यः, भेदस्तु तात्पर्यग्राहकसापेक्षत्वेन बहिरङ्गत्वान्न वाच्यः, किन्त्वार्थिक एवेति भावः। संसर्गस्य भेदाविनाभावित्वात् संसर्गेण हेतुना भेदोऽनुमीयत इति भावः। तथा चानुमानगम्य एव भेदो न तु शाब्दः।

अत्र वृत्त्या भेद एवाथवा संसर्ग एव वाच्य इत्यनयोर्मध्ये एकतरनिश्चायकप्रमाणाभावादाह—'उभयं चेति'। तेन भेदः, संसर्गश्चेत्युभयं वाच्यमिति भावः। तथा चाराजकीयभिन्नो राजसम्बन्धवाँश्चायमिति बोध उपपद्यते।

नैयायिकाः, मीमांसकाश्च सन्ति व्यपेक्षावादिनः। एतेषां मते समासे काचिद् विशिष्टा शक्तिर्नास्ति। तत्र लक्षणया विशिष्टार्थबोधो जायते। परन्तु शाब्दिकाः समासे काञ्चिद् विशिष्टामतिरिक्तां वा शक्तिं मन्यन्ते। शब्दशक्तिप्रकाशिकायां पाणिनिसम्प्रदायमभिलक्ष्य उक्तम्—'व्यञ्जकसुपः सत्यपि संख्या न बुद्ध्या इति तु समासशक्तिवादिनः पातञ्जलाः'। भाष्ये तु व्यपेक्षापक्षं मतान्तरेणोपन्यस्यैकार्थीभाव एव समर्थितः। नागेशस्तु स्पष्टमभिधत्ते—'समासादिपञ्चसु विशिष्टा एव शक्तिर्नत्वयवे, रथन्तरं सप्तपर्ण इत्यादावयवार्थानुभवाभावात्। अत एव भाष्ये व्यपेक्षापक्षमुद्भाव्य 'अत एतस्मिन् व्यपेक्षायां योऽसावेकार्थीभावविशेषः स वक्तव्य इत्युक्तम्'। धवखदिरौ, निष्कौशाम्बिः, घृतघटावित्यादिषु साहित्यनिष्क्रान्तपूर्णेत्यादयोऽर्थाः वाचनिका वाच्या इति तद्भाष्याशयः।

कौण्डभट्टेन वैयाकरणभूषणसारस्य समासशक्तिप्रकरणे एकार्थीभावपक्ष एव सिद्धान्त इति निर्णीतम्। उक्तञ्च तत्र—

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः[1]॥**

कातन्त्रपरिशिष्टकारेण श्रीपतिदत्तमहोदयेनाप्येतदेव समर्थितम्—

**ऐकार्थ्यं पृथगर्थानां वृत्तिं युक्तार्थतां विदुः।**
**शब्दानां शब्दवैचित्र्यात् तत् समासादिषु स्मृतम्॥ इति।**

भर्तृहरिणाप्येकार्थीभावपक्ष एव समर्थितः—

---

१. वै० भू० सा० समासशक्तिनिर्णयः—४।५।

**अर्थस्य विनिवृत्तत्वाल्लुगादि न विरुद्धचते।**
**एकार्थीभाव एवातः समासाख्यो विधीयते[२] ॥ इति च।**

भाष्यसिद्धान्तविरुद्धत्वान्नैयायिकाभिमतो व्यपेक्षापक्षोऽस्मिन् वैयाकरण-भूषणसारे ऊहापोहकुशलैः कौण्डभट्टैः सम्यग् खण्डितः। प्रतिपादितञ्च तत्र समासे शक्त्यस्वीकारेऽर्थवत्त्वाभावात् प्रतिपदिकसंज्ञा, सुब्लुक्, पुनः समुदयात् सुबुत्पत्तिरित्यादिकं न स्यात्, 'अनुदात्तं पदमेकवर्जम्' इत्यस्य प्रवृत्तिश्च न भवेत्। तथाहि—'अर्थवदिति सूत्रेऽर्थवदित्यत्र प्रशंसायां मतुप्। प्राशस्त्यञ्चार्थबोधजनक-त्वम्। शब्दस्वरूपमिति विशेष्यस्याध्याहारः। तथा च वृत्त्याऽर्थप्रतिपादकं यच्छ-ब्दस्वरूपं तत्प्रातिपदिकसंज्ञं भवतीत्यर्थः।

एवञ्च समासघटकपदयोः प्रत्येकं वृत्त्याऽर्थप्रतिपादकत्वेऽपि समुदाये शक्त्यनङ्गीकारेण राजपुरुषेत्यादिसमस्तस्य वृत्त्याऽर्थप्रतिपादकत्वाभावेन प्राति-पदिकसंज्ञा न स्यात्। वर्णितश्चैष विषयो महतोपष्टम्भेन वैयाकरणभूषणसारे। विशेषस्तु तत एवावगन्तव्यः, इह विस्तरभयाद् विरम्यते।



---

२. वा तृ० का०—वृत्तिसमुद्देशः।

## शक्तिनिर्णयः

शक्तिर्नाम पदेन सह पदार्थस्य सम्बन्धः। अर्थे पदसङ्केतः शक्तिरिति दर्पणकाराः। स च सङ्केतोऽस्मात् पदादयमर्थो बोद्धव्य इत्यर्थविशेष्यकेश्वरेच्छारूपः, इदं पदममुमर्थं बोधयत्विति पदविशेष्यकेश्वरेच्छारूपो वेति नैयायिकाः। अमुमेवेश्वरीयसंकेत इत्यभिधीयते। नव्यनैयायिकैरीश्वरेच्छा, ज्ञानं, कृतिर्वा शक्तिरित्युच्यते।

शक्तिस्वरूपविषये ग्रन्थकाराणामेषोऽभिप्रायो यत् यथा चक्षुरादीन्द्रियाणां रूपादिविषयकज्ञानजननेऽनादिर्योग्यता तथा शब्दानामर्थेऽनादिः सम्बन्ध एव योग्यतेति। उक्तञ्च तत्र—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ इति।**

अनेन प्रकारेण शब्दानामर्थबोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः। किन्तु, तार्किकाणां मते आधुनिकदेवदत्तादिपदेषु तथाविधाऽनादिकारणतारूपशक्त्यभावेन संकेतज्ञानमन्तरा बोधो न स्यादतः सङ्केत एव शक्तिरिति स्वीकुर्वन्ति। स च सङ्केतो न स्वरूपतः हेतुरन्यथाऽगृहीतशक्तिकानामप्यर्थबोधापत्तिः। सामान्यतो ज्ञातस्य सङ्केतस्य हेतुत्वस्वीकारे प्रमेयत्वादिना सङ्केतज्ञानेऽपि बोधः स्यात्। नापि सङ्केतत्वेन सङ्केतज्ञानं बोधहेतुः। तथा सति ईश्वरानङ्गीकर्तॄणां मीमांसकादीनां बोधानापत्तिः। अतः सङ्केतज्ञानं शाब्दबोधेऽर्थधीजनकतात्वेन हेतुः।

लक्षणास्थले शक्तेरभावात् तत्र लक्ष्यार्थबोधो न संभवतीति न शङ्क्यम्, प्रसिद्धाऽप्रसिद्धभेदेन शक्तेर्द्वैविध्ये सिद्धे लक्षणाया अनङ्गीकारेण न कश्चन दोषः। आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्, सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्। 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य प्रवाहरूपेऽर्थे प्रसिद्धा शक्तिः, तीरेऽर्थे चाऽप्रसिद्धाशक्तिरिति शक्त्यैव प्रयोगनिर्वाहे न लक्षणाऽपेक्षते। अन्यथा शाब्दबोधे शक्तिजन्योपस्थितेः लक्षणाजन्योपस्थितेश्च कारणत्वे गौरवं स्यात्। अपि च प्रत्येकं व्यभिचारवारणाय शक्तिज्ञानाव्यवहितोत्तरजायमानतदर्थविषयकशाब्दबोधं प्रति

---

१. वै० भू० सा० शक्तिनिर्णयः—३७।

शक्तिजन्योपस्थितेः, लक्षणाज्ञानाव्यवहितोत्तरजायमानतदर्थविषयकबोधे लक्षणाजन्योपस्थितेश्च कारणत्वमिति स्वीकारे महद् गौरवम् ।

न च लक्षणाऽङ्गीकर्तृमतेऽपि पदार्थोपस्थितिं प्रति शक्तिज्ञानं कारणमथ च लक्षणाज्ञानं कारणमित्येत्र भेदेन न पदार्थोपस्थितिकारणता, किन्तु, शाब्दबोधं प्रति वृत्तिजन्यपदार्थोपस्थितिः कारणम्, पदार्थोपस्थितिं प्रति वृत्तिज्ञानं कारणम् इत्येवं सामान्यतः कल्पनादेकेनैव कार्यकारणभावेन न गौरवमिति वाच्यम्, शक्तिलक्षणान्यतरत्वस्य शाब्दबोधपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वस्य वा वृत्तित्वस्य कारणतावच्छेदकत्वे गौरवस्य दुर्वारत्वादिति । एतत्सर्वं विस्तरेण विचार्य बोधजनकत्वमेव शक्तिरिति संसाधितम् ।

असाधुशब्देभ्योऽपि बोधदर्शनात्तेषामपि वाचकत्वमाशङ्क्य असाधुशब्दैः साधुशब्दस्मरणादेव बोधो न तु साक्षादिति सिद्धान्तितम् । उक्तमपि -

**असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।**
**वाचकत्वाऽविशेषे च नियमः पुण्यपापयोः[1] ॥ इति ।**

असाधुः=गावी-गगरीत्यादयोऽपभ्रंशाः । असाधुशब्दात् साधुशब्दस्य स्मरणं भवति । स्मृतात्साधुशब्दादर्थबोधो भवतीति परम्परयाऽसाधुशब्दोऽर्थंबोधयतीति ।

नन्वपभ्रंशानां व्यवहारे शक्तिकल्पकव्यवहारस्य तुल्यत्वेऽपि तेषां साक्षादवाचकत्वे किं मानमिति चेन्न, तत्तद्देशभेदभिन्नेषु तेष्वपभ्रंशेषु शक्तिकल्पने गौरवात् । अत्र विषये नैयायिकानामेषोऽभिप्रायो यद्देशभेदेनापभ्रंशा भिन्नाः । तेषु शक्तिकल्पने शक्त्यानन्त्यापत्तिः स्यादतोऽपभ्रंशेषु शक्तिर्नैव कल्प्यते । अतस्तेषां मतेऽपभ्रंशेषु साक्षाद् वाचकत्वमस्तीति वक्तुं न शक्यते ।

परं वैयाकरणेभ्य इदं मतं न रोचते । तेषां मते संस्कृतवदपभ्रंशा अपि शक्ता एव । किन्तु शक्तत्वेऽपि तेषां साधुत्वं नेष्यते ।, कोशादौ पर्यायतया साधुशब्दानामेव परिगणनात् ।

यदि शब्दैश्चापशब्दैश्च समानायामर्थावगतौ सत्यां किं शास्त्रेण क्रियत इति चेदत्रोच्यते– 'नियमः पुण्यपापयोः इति' । 'एकः पूर्वपरयोः' [६।१।८४] इति सूत्रे भाष्ये 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवतीत्युक्तेः, पुण्यजननाय साधुभिर्भासितव्यमिति विधिः, नाऽसाधुभिरिति निषेध इति ।



---

1. वै० भू० सा० शक्तिनिर्णयः – ३८ ।

## स्फोटनिर्णयः

वाक्ये पदानि प्रविभज्य पदे च प्रकृतिप्रत्ययविभागं कल्पयित्वा तत्तदर्थ-वाचकत्वं व्याकरणशास्त्रे प्रतिपादितम्। परन्तु 'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतिस्थितिः' इति प्रतिपादनेन कौण्डभट्टमते प्रकृतिप्रत्ययाद्यर्थविचारोऽवास्तविक इति संसूच्यते। तत्र च स्फोटस्याष्टौ भेदाः प्रदर्शिताः—

(१) वर्णस्फोटः।
(२) पदस्फोटः।
(३) वाक्यस्फोटः।
(४) अखण्डपदस्फोटः।
(५) अखण्डवाक्यस्फोटः।
(६) वर्णजातिस्फोटः।
(७) पदजातिस्फोटः।
(८) वाक्यजातिस्फोटः।

तेषु स्फोटेषु वाक्यस्फोटातिरिक्तनामवास्तवत्वमेव। शाब्दिकनये वाक्य-स्फोटस्य मुख्यत्वम्, शक्तिग्राहकशिरोमणिना वृद्धव्यहारेण लोकानां प्रथमतो वाक्ये एव शक्तिग्रहात्, वाक्यादेव वाक्यार्थस्य पूर्णत्वाच्च। अखण्डवाक्यस्फोटा-नामवास्तत्वे किमर्थं तेषां निरूपणं क्रियत इति चेदत्रोच्यते—यथा शुद्धब्रह्मज्ञानार्थमन्नमय-प्राणमय-मनोमय-विज्ञानमयाऽनन्दमयेति पञ्चसु कोशेष्वपारमार्थिक-ब्रह्मत्वप्रतिपादनमुपायः, यथा वाऽरुन्धतिज्ञानार्थं स्थूलनक्षत्रेऽपारमार्थिकारुन्धतो-त्वबोधनम्। एवमेव पारमार्थिकाखण्डवाक्यार्थबोधार्थमेते किल स्फोटा उपाया एव।

उक्तञ्च हरिणा -

**उपायाः शिक्षमाणानां बालानामुपकारकम्।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥**

## वर्णस्फोटः

प्रकृतिप्रत्ययघटकतया गृहीतशक्तिकस्य वर्णस्य वाचकत्वे वर्णस्फोटः सिद्धयति। स च प्रयोगघटकविसर्गतिबादिः। तार्किकाणां मते स्थान्येव वाचको

न त्वादेशः। परन्तु शाब्दिकानां मते स्थानित्वेन कल्पिता लकारसकारादयो न वाचकाः, तेषामनियतत्वात्। विसर्गे रोः स्मरणम्, तेन च सोः, णला तिप्स्मरणम्, तिपा च लकारस्य स्मरणमिति गौरवापत्तेः। तस्मात् प्रयोगघटकस्यैव वर्णस्यार्थबोधकत्वात् वर्णस्फोटः सिद्धयतीति शुद्धब्रह्मज्ञानाय सर्वापेक्षया बहिर्भूतान्नमयकोशवदखण्डवाक्यबोधनाय। पारमार्थिकोऽपि वर्णस्फोटः स्वीकरणीय एव। अत्रान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात् 'विभाषा' [५।३।३८] इति सूत्रस्थकैयटोक्तिः, 'हयवरट्' सूत्रेऽर्थवन्तो वर्णा इति भाष्योक्तिश्च वर्णस्फोटे प्रमाणम्।

## पदस्फोटः

वर्णस्फोटापेक्षयाऽन्तरङ्गः प्राणमयकोशवत् पदस्फोटोऽपि युक्त्याऽङ्गीकरणीयः। साक्षाद्वाक्यघटकत्वेन पदस्फोटस्यान्तरङ्गत्वम्। वर्णस्फोटोक्तयुक्तिभिः समभिव्याहृतवर्णानां वाचकत्वसिद्धौ तादृशवर्णसमुदायरूपपदस्य वाचकत्वं सुतरां सिद्धयति, प्रतिवर्णमर्थस्मरणस्य सर्वानुभवविरुद्धत्वात्। तथा च वर्णसमुदायो वाचक इति रीत्या पदस्फोटपक्षोऽपि सिद्धयति। सुप्तिङन्तं पदम्, एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य प्रकृतिप्रत्ययरूपस्य पच्, तिप्-इत्यादिकस्य वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एव। अत आह—'अथादेशा वाचकाश्चेत्पदस्फोटः ततः स्मृतः' इति।

सखण्डाखण्डभेदेन पदस्फोटो द्विविधः। तत्र सुबन्ततिङन्तरूपो 'देवदत्तः पचति' इत्यादिरूपः सखण्डपदस्फोटः। अखण्डपदस्फोटस्तु सर्वैः वर्णैरुपस्थापितवर्णैर्व्यज्यते। स चार्थप्रत्यायक इति वैयाकरणराद्धान्तः।

नैयायिका वेदान्तिनश्च त्रिधा विकल्प्य पदस्फोटप्रत्याख्यानप्रयासमकुर्वन्। तैरेतदनुचिन्तितम्—यदेष स्फोटः यावद्वर्णव्यङ्ग्यो यत्किञ्चिद्वर्णव्यङ्ग्यः, चरमवर्णव्यङ्ग्यो वा। तत्र प्रथमः कल्पो नैव समीचीनः, आशुविनाशिनां वर्णानां यौगपद्यासम्भवात्। द्वितीयकल्पे तु 'पटः' इत्यादौ 'प' शब्देनैव स्फोटे व्यञ्जिते टवर्णोच्चारणस्य वैयर्थ्यं स्यात्। तृतीयोऽपि कल्पो नैव युक्तियुक्तः, यतो पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णेनैवार्थसिद्धावलं स्फोटेन।

अत्र शाब्दिकाः समादधते—आपातरमणीयोऽयं विकल्पपक्षोपक्षेपः। प्रथमकल्पे वर्णानामाशुविनाशित्वं यदुक्तं तत्र हेतुं न पश्यामः। गकार उत्पन्नो गकारो नष्ट इत्यादिप्रतीतिस्तु आवारकेऽपसृतेऽऽकाशः सम्भूतः, आवारके सन्निहिते 'आकाशो नष्टः' इति प्रतीतिवदाविर्भावतिरोभावमूलिकेति। अनित्यत्वे त्वनन्त-

प्रागभावप्रध्वंसकल्पने महद् गौरवम् । किञ्च स्यान्नाम वर्णानामनित्यत्वम्, तथापि वर्णानुभवजन्यसंस्कारजन्यस्मृतीनां यौगपद्यं सम्भवति । द्वितीयकल्पोऽपि न युक्तिसहः, 'पट' शब्दघटकस्य पकारमात्रस्य व्यञ्जकत्वे तस्य पद-पटोभयघटकतया तेन पदस्फोटो व्यज्यते उत पटस्फोटो व्यज्यते इति सन्देहस्य सम्भवेन तन्निवृत्तये टकारोच्चारणस्य सार्थक्यात् । तृतीयकल्पोऽपि न कमनीयः, पटारम्भकत्वेनाभ्युपगतस्य चरमतन्तुसंयोगस्य पटकार्यकारित्वे सम्भवे सत्यपि यथा भवद्भिरतिरिक्तोऽवयवी स्वीक्रियते तथाऽस्मन्मतेऽप्येकोऽतिरिक्तः स्फोटः स्वीक्रियत इति क्वानुभवविरोधः । लाघवन्तु सुस्पष्टमेव । ध्वनिभिरेव स्फोटो व्यज्यते । अतोऽनन्तवर्णतत्प्रागभावतद्ध्वंशकल्पना, जरा-राज-नदी-दीनेत्यादिभिन्नार्थप्रतीत्यर्थमानुपूर्व्याः पूर्वोक्तपूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितं चरमवर्णस्य च कारणत्वं न वक्तव्यमिति महल्लाघवम् ।

अखण्डपदस्फोटस्वीकारे नातिरिक्ता कापि कल्पनाऽपेक्षिता, अपि तु यथा भवद्भिः 'पाचक' इत्यादौ यौगिकं पदमित्युच्यते अखण्डशक्त्यनुसन्धानं तत्रापेक्षते । एवमेव व्याकरणज्ञानशून्यस्य व्यवहारदर्शनात् तत्कृतेऽखण्डस्फोटोऽवश्यमेव स्वीकरणीयः । वैयाकरणभूषणसारे पदस्फोटनिरूपणार्थं प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वपि समुदायव्युत्पत्त्याऽर्थबोधात् तत्राप्यावश्यिकैव शक्तिः—इत्यादिवाक्यैः समर्थितः पदस्फोट इति विस्तरेण तत एवावगन्तव्य इति ।

## वाक्यस्फोटः

वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वात् सप्रपञ्चं पदस्फोटनिरूपणानन्तरं स्मृतिविषयत्वे सत्युपेक्षानर्हत्वरूपां प्रसङ्गसङ्गतिमादायेदानीं वाक्यस्फोटनिरूपणार्थं वैयाकरणभूषणसारदृष्ट्या क्रियते कश्चन प्रयासः ।

'हरेऽव' इत्यादौ पदाज्ञानेऽपि समुदायादर्थबोधात् तादृशसमुदायात्मकवाक्य एव वाचकत्वमिति वाक्यस्फोटसिद्धिः । उक्तञ्च [1]वैयाकरणभूषणसारे—

१. वै० भू० सा० स्फोटनिर्णयः—का० ६६ ।

हरेऽवेत्यादि दृष्ट्वा हि वाक्यस्फोटं विनिश्चिनु। 'हरेऽव' 'विष्णोऽव' इत्यादौ 'एङः पदान्तादति' [६।१।१०९] इत्यादिनैकादेशे जाते 'हरे' इत्येकं पदम्, 'अव' इत्यपरं पदम्– अथवा 'हरे' इत्येकं पदमपरञ्च वेति पदमित्यत्र विनिगमकाभावान्न पदयोर्विभागः सुस्पष्टं ज्ञेयो भवति। तत्र प्रत्येकं पदयोः स्पष्टज्ञानाभावेऽपि नार्थबोधानुपपत्तिः, अपि तु सुबन्ततिङन्तपदसमुदायरूपवाक्ये बोधजनकतारूपशक्तिज्ञानसत्त्वेन तस्मादर्थबोध उपपद्यते। वाक्यार्थज्ञाने वाक्यघटकीभूतयावत्पदार्थज्ञानस्य कारणत्वात् यया युक्त्या पदस्फोटः साध्यते तयैव युक्त्या वाक्यस्फोटोऽपि सिद्धयति। यथा—घटाद्यर्थनिरूपिता बोधजनकतारूपशक्तिर्घटादिप्रतिपादकेषु तत्प्रकृतिकसुबन्तेषु वा पदेषु कल्पिता तद्वद्वाक्यार्थनिरूपिताबोधजनकताशक्तिर्घटोऽस्त्यादिवाक्येष्वभ्युपगन्तव्येति।

वाक्यस्फोटो द्विविधः—

( ) सखण्डवाक्यस्फोटः।

(२) अखण्डवाक्यस्फोटश्च।

तत्राखण्डो वाक्यस्फोटः पदातिरिक्ताखण्डपदव्यङ्ग्यो भवति। अखण्डवाक्यस्फोटे आकाङ्क्षायोग्यताऽऽसत्तीनां कारणत्वं नाङ्गीक्रियत इति महदेव लाघवम्। अखण्डवाक्यस्फोटे एव शब्दानुशासनमाश्रित्य 'विष्णोऽव' इत्यादौ जाते पूर्वरूपे पदविभागोऽगत्या स्वीकरणीय इति स (अखण्डवाक्यस्फोटः) एव प्रक्रियाभेदवशात् सखण्डवाक्यस्फोट इति। एकतिङन्तार्थमुख्यविशेष्यकं वाक्यन्नाम--पचति, भवति इत्यादि। अत्र पचतीत्यस्य व्यापारमुख्यविशेष्यकशाब्दबोधवशात् विशेष्यत्वेऽपि न मुख्यविशेष्यत्वम्।

नैयायिकास्तु विशेष्यभूतभावनैकत्वादर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेत् विभागः स्यादिति मीमांसकसम्मतं मतं परित्यज्य तात्पर्यविषयैकवाक्यमिति तदर्थं परिकल्प्य प्रत्यक्षानुमानयोरेकवाक्यत्वं प्रत्याख्यातम्। व्यवहारेण शक्तिग्रहात् वाक्यस्यैव वाचकत्वात् वाक्यस्फोटः सिद्धयति। व्युत्पित्सूनां बालानामादौ वाक्ये एव शक्तिग्रहः प्रसिद्धः। अतो वाक्यस्फोटो न काञ्चिदपि विवादपदवीमधिरोहति।

अखण्डवाक्यस्फोटोऽपि द्विधा— वर्णातिरिक्तो वर्णानतिरिक्तश्च। यदा

गौरवभयाद् वर्णाः नाङ्गीक्रियन्ते लाघवात् ध्वनिभिरेवाखण्डवाक्यस्फोटो व्यज्यते तदा वर्णातिरिक्तो वाक्यस्फोटो स्वीक्रियते। अस्मिन् कल्पे वर्णानामेवाभावेन यावद्वर्णव्यक्तिः स्वयमेव पराहता। यदा तु ध्वनिभिः वर्णा व्यज्यन्ते तदा अखण्ड-वाक्यस्फोटः, यतो ह्यस्मिन् पक्षे भवति क्रियाकारकयोर्विभागः।

वर्णानतिरिक्ताखण्डवाक्यस्फोटस्तु पूर्वरूपैकादेशे जाते प्रातिपदिकाख्य तयोः विभागस्याशक्यत्वात् 'हरेऽव' 'विष्णोऽव' इत्यादिवाक्ये सिद्धयति। वैयाकरण-भूषणसारे भर्तृहरिमतमवलम्ब्य समर्थित एष पक्षः --

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥

एष द्विधा विभक्तो वाक्यस्फोटः 'पश्य, मृगो धावति' 'पचति भवति' इत्या-दावपि सुग्रह एव। मृगकर्तृकवर्त्तमानधावनक्रियाया दृशिक्रियायां कर्मतासम्बन्धे-नान्वयः। देवदत्तकर्तृकपचिक्रियायाः भवतिक्रियायामन्वयः। उक्तञ्च वाक्य-पदीये --

सुबन्तं हि यथाऽनेक तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुः तिङन्तस्य विशेषणम्॥

अनेकवर्णातिरिक्तोऽनेकध्वनिव्यङ्ग्यः कस्तावदयं पदार्थं अखण्डवाक्य-स्फोटात्मकः। यथा--शाब्दिकैः रेफद्वयाज्भक्तिविशिष्ट एको वर्णः 'ऋति ऋ वा' 'लृति लृ वा' इत्यत्र वार्त्तिके स्वीक्रियते। अथवा "सिद्धमेतत् सस्थानत्वात्" 'ऐचोश्चोत्तरभूयस्त्वात्' इति वार्त्तिके अनेकाचामेकवर्णात्मकत्वम्, तथैवात्राप्यनेक-ध्वनिव्यङ्ग्यो वाक्यात्मक एको वर्ण इति स्वीक्रियते। स च शब्दब्रह्मरूपः। तत्र शब्दब्रह्मेति शब्दार्थः शब्दमिति केचन वदन्ति। चैतन्ये सर्वभूतानां शब्दब्रह्मेति वस्तुगतिः। शब्दब्रह्मेति निर्वचनेनापि तस्य वर्णत्वं सिद्धमेव। अनुमानेनापि तत्साधयितुं शक्यते।

वस्तुतस्तूपनीतमानमेवाखण्डवाक्यस्फोटरूपैकवर्णत्वसाधनायालम्। यथा -- चन्दनखण्डस्य लौकिकं सौरभ्यस्यालौकिकं प्रत्यक्षं तथा धूमस्य लौकिक वह्नेर-

लौकिकमित्युपनीतमानेन सिद्धयति। तस्माल्लाघवाद्दोषाभावात् ध्वनिव्यङ्गय-स्यान्यस्याभावाच्चाखण्डवाक्यस्फोटस्यैकवर्णत्वं सिद्धयति। उक्तं हि वैयाकरण-भूषणसारे –

इत्थ निष्कृष्यमाणं यच्छब्दतत्त्व निरञ्जनम्।
ब्रह्मवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने न:॥



# विषय-सूची





# विषयानुक्रमणिका

## अथ धात्वर्थनिर्णयः

| विषयः | पृष्ठम् |
|---|---|
|  |

## अथ लकारार्थनिर्णयः



## अथ सुबर्थनिर्णयः

## अथ नामार्थनिर्णयः



## अथ समासशक्तिनिर्णयः

## अथ शक्तिनिर्णयः



## अथ नञर्थनिर्णयः

## अथ निपातार्थनिर्णयः



## अथ त्वादिभावप्रत्ययार्थनिर्णयः



## अथ देवताप्रत्ययार्थनिर्णयः

## अथाभेदैकत्वसङ्ख्यानिर्णयः



## अथ सख्याविवक्षानिर्णयः



## अथ क्त्वाद्यर्थनिर्णयः



## अथ स्फोटनिर्णयः

# वैयाकरणभूषणसारस्थकारिकाणामनुक्रमणिका

श्रीमत्कौण्डभट्टविरचितो

# वैयाकरणभूषणसारः

## ( सावित्रीव्याख्योपेतः )

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते ॥१॥

---

### सावित्री

नत्वा शिवं गणेशञ्च पितरं भैरवं बुधम् ।
आद्याप्रसादमिश्रोऽहं गौतमान्वयसम्भवः ॥ १ ॥
कौण्डभट्टोक्तभव्यस्य सारस्यार्थप्रकाशिकाम् ।
सावित्रीं विशदां व्याख्यामहं कुर्वे मनोरमाम् ॥ २ ॥
सारो भारोऽपि नाभाति वैयाकरणभूषणे ।
बालानामल्पबोधानां मतौ कण्ठेऽवनौ वरः ॥ ३ ॥
तत्रापि भासतामेष मम व्याख्यानमालया ।
सावित्रीकलया सौर्या भव्यो भाति यथा शशी ॥ ४ ॥

अन्वयः—गौरीरमणरूपिणं श्रीलक्ष्मीरमणं नौमि । [ 'अहं कौण्डभट्टः' इत्यध्याहार्यम् ] यतः स्फोटरूपमेतद् सर्वं जगद् विवर्तते ॥१॥

हिन्दी—मैं ( कौण्डभट्ट ) पार्वतीपति (शिव) रूपी लक्ष्मीपति (विष्णु) को नमस्कार करता हूँ, जिसका स्फोटरूप ( शब्द, अर्थ उभयात्मक ) यह सम्पूर्ण जगत् विवर्त्त है ।

व्याख्या—गौरीरमणरूपिणम्=गौर्याः रमणः=गौरीरमणः, तस्य रूपम्=गौरीरमणरूपम्, तदस्यास्तीति गौरीरमणरूपी, तं गौरीरमणरूपिणम् ।

अत्र 'गौरीरमण' पदस्य रूपशब्देन सह षष्ठीसमासः । ततो 'गौरीरमणरूपशब्दस्यादन्तत्वात् 'अत इनिठनौ' (५।२।११५) इत्यनेन इनि प्रत्ययः, तेन 'गौरीरमणरूपिन्' इति रूपम् । ततः द्वितीयाया एकवचने 'गौरीरमणरूपिणम्' इति सिद्ध्यति ।

न च गौरीरमणस्य रूपमिव रूपं यस्य तम्—गौरीरमणरूपमित्यस्मादेवोक्तार्थलाभसम्भवे 'न कर्मधारयान्मत्वर्थीयः'' इत्यादिन्यायदिशा वृत्त्यन्तरात् वृत्तेर्गौरवग्रस्तत्वादिनि

प्रत्ययोऽयुक्त इति वाच्यम्, 'प्रत्ययस्थात्कात्' (७।३।४४) इति सूत्रे 'असुव्वतः' इति भाष्यप्रयोगादुक्तन्यायस्यानित्यत्वबोधनात्।

श्रीलक्ष्मीरमणम्=श्रीर्लोकोत्तरा कान्तिः, तया सहिता लक्ष्मीः श्रीलक्ष्मीः अर्थात् महालक्ष्मीः। अत्र शाकपार्थिवादित्वात् सहितशब्दलोपः। तस्याः रमणः=दयितः तम् (विष्णुम्) अथ वा श्रीः=सरस्वती सा च लक्ष्मीश्च तयोः रमण इत्यर्थः। 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेः। तत्र श्रीशब्देन सरस्वती न तु लक्ष्मीः, लक्ष्मीशब्दस्य पृथगुपादानात्।

नौमि=प्रणमामि। अत्र णु[नु] धातुः। अत्र स्वाभीष्टसाधकाशीर्वचनानुकूलव्यापार एव नुधात्वर्थः।

यतः=यस्मादुपादानात्। आद्यादित्वात्तसिः। सार्वविभक्तितसिना यस्मिन्नधिष्ठाने इति वार्थः।

स्फोटरूपम्=स्फुटत्यर्थो जगद्रूपो यस्मात् स स्फोटः। अथ वा स्फुटति बोधविषयो भवतीत्यर्थोऽस्मादिति स्फोटः=शब्दः। स्फोटरूपमिति भगवतो जगतश्च विशेषणम्। आद्ये स्फोटरूपम्=सकलार्थप्रकाशकम्, द्वितीये—स्फोटरूपं=नामरूपात्मकं ब्रह्माऽभिन्नमिति वाऽर्थः। 'नामरूपे व्याकरवाणि,' सर्वं खल्विदं ब्रह्मेति' च श्रुतेः।

एतद्=दृश्यमानम्, सर्वं जगत्।

विवर्त्तते=विषयसत्ताकं भवति। अतात्त्विकान्यथाभावाश्रयो भवतीति वार्थः। तदुक्तम्—तात्त्विकोऽन्यथाभावः परिणामोऽतात्त्विकान्यथाभावो विवर्त्त इति। अन्यथाभावश्च भ्रम एव। तदाश्रयत्वं तु विषयतया जगति बोध्यम्।

विशेष—प्रकृत मङ्गल में शिवरूप विष्णु को नमस्कार करके शिव और विष्णु में अभिन्नता प्रदर्शित की गई है। शिव और विष्णु की अभिन्नता के बारे में पुराणादि में निर्देश मिलता है। कहा है—

> शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
> विष्णुरुद्रान्तरं यच्च यो ब्रूते मूढधीस्तु सः॥
> रौरवादिषु घोरेषु नरकेषु पतत्यधः॥

यद्यपि व्याकरणशास्त्र का प्रवर्त्तक होने के कारण शिव ही अधिक आदरणीय है और उन्हीं का स्तुत्यात्मक मङ्गल करना उचित था; तथापि शिव और विष्णु के अभिन्न होने से विष्णु की स्तुति करना भी अनुचित नहीं है।

**स्फोटरूप**—'स्फोटरूप' यह पद भगवान् और जगत् दोनों का विशेषण है। भगवान् का विशेषण मानने पर "स्फोटः (शब्दः) रूपम् (स्वरूपम्) 'यस्य तम्" यह विग्रह मानना होगा। अर्थात् अनादि अनन्त अक्षरात्मक शब्दतत्त्वस्वरूप विष्णु हैं। अभिप्राय यह है कि वैयाकरण सिद्धान्त में जगत् का उपादान कारण स्फोट (शब्द) है। इसलिये उक्त व्युत्पत्ति के द्वारा शिव से अभिन्न विष्णु को स्फोट रूप में नमस्कार किया गया है।

**अशेषफलदातारं भवाब्धितरणे तरिम् ।**
**शेषाऽशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥२॥**

---

'स्फोटरूप' को जगत् का विशेषण मानने के पक्ष में शब्दार्थोभयरूप जगत् शिव से अभिन्न विष्णु का विवर्त्त है। इस अर्थ में स्फुटत्यर्थोऽस्मादसौ स्फोटः (शब्दः), रूप्यते= बोध्यतेऽसौ रूपमर्थः। स्फोटश्च रूपञ्चेत्यनयोः समाहार इति स्फोटरूपम्। 'नामरूपे व्याकरवाणि' यह श्रुति इसी अर्थ में समन्वित होतो है। किन्तु ग्रन्थ के अन्त में आचार्य कौण्डभट्ट-उपसंहार वाक्य के द्वारा स्फोट को ब्रह्म स्वरूप माना है। कहा है—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम्।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः॥

अतः उपक्रम वाक्य में भी स्फोट को विष्णु के विशेषण में वक्ता का तात्पर्य मानना उचित है।

**विवर्त्तवाद**—वेदान्त मत में अतात्विक अन्यथा भाव को विवर्त्त कहा जाता है। वैयाकरणों का भी अभिमत विवर्त्त यही है। अतात्त्विक अन्यथाभाव उसे कहते हैं; जिसकी सत्ता तत्त्वतः न होते हुये भी भ्रम से प्रतीति होती है। जैसे—रज्जू में सर्प की प्रतीति। यद्यपि रज्जू में सर्प की सत्ता नहीं है, किन्तु कदाचित् अज्ञान वश सर्प की प्रतीति होती है। उसी प्रकार शब्द ब्रह्म में जगत् की सत्ता न होते हुये भी भ्रमवश उसकी प्रतीति होती है।

न्यायमत में विवर्त्त का अर्थ उत्पन्न होना है। उनके मत में आकाश आदि के नित्य होने से शेष जगत् परमाणुओं से उत्पन्न होता है। सांख्यमत में विवर्त्त का अर्थ आविर्भाव है। उनके मत में अहंकार आदि समस्त जगत् नित्य होने से सम्पूर्ण जगत् उत्पत्ति विनाश रहित आविर्भाव तिरोभाव शाली है॥ १॥

[सा०] अन्वयः—शेषाऽशेषार्थलाभार्थम् अशेषफलदातारं भवाब्धितरणे तरिम् शेषभूषणं प्रार्थये॥ २॥

हिन्दी—शेष अर्थात् पतञ्जलि के सम्पूर्ण अर्थ (महाभाष्य) के ज्ञान के लिये सम्पूर्ण (ऐहलौकिक, पारलौकिक) फल को देने वाले, संसार सागर को पार करने में नौका स्वरूप शेषभूषण (शिव, विष्णु) की प्रार्थना करता हूँ।

शेषनाग शिव और विष्णु-दोनों के भूषण हैं क्योंकि शिव अलंकार रूप में धारण करते हैं, तथा विष्णु शेषनाग को शय्या बनाकर उन पर शयन करते हैं।

**व्याख्या—**

**शेषाऽशेषार्थलाभार्थम्**=शेषस्य=शेषनागस्य महाभाष्यकृतः पतञ्जलेः, योऽशेषोऽर्थः=वैयाकरणनिखिलसिद्धान्तः, तस्य लाभाय=ज्ञानाय।

वाग्देवी यस्य जिह्वाग्रे नरीनर्त्ति सदा मुदा ।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥३॥

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् ।
ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥४॥

---

**अशेषफलदातारम्**=सोऽहमामुष्मिकाण्यपवर्गपर्यन्तानि तत्तत्कर्मफलानि तेषां दाता तम् ।

**भवाब्धितरणे तरिम्**=भवः=संसारः, स एवाब्धिरिति मयूरव्यंसकादित्वात्समासः तस्य तरणे=पारगमने तरिम्=तरणसाधनमिति नौकादिकमिति यावत् ।

शेषभूषणम्=शेषः=शेषनागः, भूषणम् अलङ्कारो यस्य तं शिवम् । शय्यात्वेन विष्णोरपि भूषणत्वात् तं विष्णुमित्यपि बोध्यम् ॥

**प्रार्थये**=अभीष्टसिद्धये प्रवर्तये ॥ २ ॥

[सा०] अन्वयः—वाग्देवी यस्य जिह्वाग्रे सदा मुदा नरीनर्त्ति, तं पितृव्यं भट्टोदीक्षितम् अहं सिद्धये नौमि ॥ ३ ॥

हिन्दी—वाग्देवी सरस्वती, जिनकी जिह्वा के अग्र भाग पर सदा प्रसन्नतापूर्वक नृत्य किया करती है । उन पितृव्य भट्टोजिदीक्षित को अपने अभीष्टसिद्धि के लिये नमस्कार करता हूँ ।

[ उक्त श्लोक अधिकांश संस्करणों में उपलब्ध नहीं है । ]

व्याख्या—वाग्देवी=वाचाम्=निखिलगिराम्, देवी=अधिष्ठात्री देवता, सरस्वती ।

यस्य=भट्टोजिदीक्षितस्य, जिह्वाग्रे=रसनाया अग्रभागे । सदा=निरन्तरम्, मुदा=हर्षेण नरीनर्त्ति=पुनः पुनरतिशयेन वा नृत्यति । तम्=प्रख्यातम्, पितृव्यम्=पितुर्भ्रातरम्, भट्टोजिदीक्षितम् =तन्नामकम् । अहम् =कौण्डभट्टः सिद्धये=प्रारिप्सितग्रन्थसमाप्तये, तत्प्रचाराय च । नौमि=प्रणमामि ॥ ३ ॥

सा०] अन्वयः—पाणिन्यादिमुनीन् प्रणम्य, द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् रङ्गोजिभट्टाभिधं पितरं ढुण्ढि ( च ) प्रणम्य गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान् सिद्धान्तान् उपपत्तिभिः प्रकटये, तेषां वचो दूषये ॥ ४ ॥

हिन्दी—पाणिनि आदि मुनियों तथा द्वैत (संशयात्मक ज्ञान) रूप अन्धकार को दूर करने-हेतु पुरुषरूप में वाग्देवता सरस्वती के अवतार रङ्गोजिभट्ट नामक अपने पिता, एवं

ढुण्ढिराज गणेश को नमस्कार कर गौतम (न्यायशास्त्र के प्रणेता) जैमिनि (मीमांसा शास्त्र के आचार्य) के वचनों की व्याख्या करने वालों द्वारा दूषित किये गये सिद्धान्तों को युक्तियों द्वारा प्रकाशित करता हूँ और उन व्याख्याकारों के दोषाधायक वचनों का खण्डन करता हूँ।

व्याख्या--पाणिन्यादिमुनीन्=पाणिनिः आदिर्येषान्ते पाणिन्यादयः, पाणिन्यादयश्च ते मुनयः तान्।

द्वैतध्वान्तनिवरणादिफलिकाम्=द्वौ इतः=आश्रयत्वेन प्राप्तः ईतः=भेदः तस्येदं ज्ञानं द्वैतम्। अर्थात् द्वाभ्यां जडत्वाजडत्वाभ्यां विरुद्धधर्माभ्यामितो ज्ञातो यश्चैतन्यरूपस्तत्र द्वैतं मिथ्याज्ञानमिति। तदेव ध्वान्तं=तमः, तस्य निवारणम् आदिफलं यस्याः सा ताम्।

पुंभाववाग्देवताम्=पुंसः भावः आकाररूपो यस्याः सा पुंभावा। पुरुषाकृतिकेत्यर्थः। सा चासौ वाग्देवता=सरस्वती, तद्रूप इत्यर्थः। यद्वा पुंभावशब्दोऽर्शाद्यजन्तः। तथा चाऽविष्कृतपुंविग्रहां सरस्वतीमित्यर्थः।

रङ्गोजिभट्टाभिधम् पितरम्=तन्नामकं पितरम्।

ढुण्ढिम्=गणेशं, प्रणम्येति पूर्वेणान्वयः।

पितृनमस्कारानन्तरं गणपतिनमस्कारस्यानौचित्याड् ढुण्ढिं गणेशावतारं पितरमित्यर्थः। अत एव मत्पिता न केवलं वाग्देवताऽवतारोऽपि तु मङ्गलमूर्त्तित्वेन गणपतिस्वरूपोऽपीति सूच्यते।

गौतमजैमिनिर्नयवचनव्याख्यातृभिर्दूषितान्=गौतमश्च जैमिनिश्च गौतमजैमिनी=न्यायमीमांसासूत्रप्रणेतारौ, तयोरिमानि=गौतमजैमिनीयानि तानि च तानि वचनानि=न्यायसूत्राणि, मीमांसासूत्राणि च, तेषां व्याख्यातारः, तैर्दूषितान्=दोषवत्त्वेन प्रदर्शितान् सिद्धान्तान्, उपपत्तिभिः=युक्तिभिः, प्रकटये=प्रकाशये। तेषां=गौतमजैमिनीयवचोव्याख्यातृणामाधुनिकतार्किकमीमांसकानां वचो दूषये=बाधकयुक्तिभिर्निराचक्षे।

विशेषः--उपर्युक्त वर्णन से सिद्ध होता है कि गौतम और जैमिनि के अनुसार ही वैयाकरणों के सिद्धान्त हैं न कि उनके विरुद्ध। व्याख्याकारों ने विरुद्ध होने का भ्रम पैदा कर दिया था।

ढुण्ढिम्—'ढुण्ढ' अन्वेषणे धातु से औणादिक इन् प्रत्यय करने पर 'ढुण्ढि' शब्द निष्पन्न होता है। इसका अर्थ है—

ढुण्ढति=अन्विष्यति व्याख्यातृदोषान् इति ढुण्ढिः, तम्।

इनके पितृदेव सभी अर्थों के अन्वेषण में दक्ष होने के कारण इनको ढुण्ढि स्वरूप माना गया है अन्यथा अज्ञान अन्धकार निवारण में दक्षता न हो पाती। काशीखण्ड में आया है—

**नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम् ।**
**श्रीकौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम् ॥५॥**

**प्रारिप्सितप्रतिबन्धकोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबन्धनंश्चिकीर्षितं प्रतिजानीते—**

**फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।**
**तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥१॥**

---

अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः ।

सर्वार्थढुण्ढितया भव ढुण्ढिनामा ॥ काशीखण्ड । अध्याय-५७ श्लोक--११० ॥४॥

सा०] अन्वयः--अहं कौण्डभट्टः गणेशपादाब्जं गुरून्, अथ सरस्वतीं (च) नत्वा वैयाकरणभूषणं कुर्वे ॥ ५ ॥

हिन्दी—मैं कौण्डभट्ट, गणेशजी के चरणकमल, गुरु और सरस्वती को नमस्कार कर वैयाकरणभूषण को बनाता हूँ ।

विशेष—यह श्लोक बहुत से संस्करणों में उपलब्ध नहीं है । लोगों का कहना है कि यह श्लोक "वैयाकरणभूषण" का है न कि "वैयाकरणभूषणसार" का, इसीलिये ग्रन्थकार ने लिखा है--कुर्वेऽहं वैयाकरणभूषणम् ।

इसके विपरीत कुछ विद्वानों की ऐसी धारणा है कि ग्रन्थकार ने (कुर्वेऽहं वैयाकरण-भूषणम्) कह कर नामैकदेश का ग्रहण किया है । वहाँ ग्रन्थकार का तात्पर्य 'वैयाकरण-भूषणसार' से है ।

सा०]--प्रारम्भ किये जाने वाले ग्रन्थ के विघ्नों की शान्ति के लिये किये गये श्रीपतञ्जलि के स्मरण रूप मङ्गल को शिष्यों के शिक्षार्थ निबद्ध करते हुये क्रियमाण ग्रन्थ के विषय में प्रतिज्ञा करते हैं:--

'फणी' अर्थात् शेषनाग के अवतार भगवान् पतञ्जलि के द्वारा विरचित महाभाष्य रूपी समुद्र से 'शब्दकौस्तुभ' निकाला गया है । वहाँ पर निर्णीत अर्थों को ही यहाँ पर संक्षेप में कह रहे हैं ।

विशेष--उपर्युक्त कथन के अनुसार विघ्नध्वंस के लिये मङ्गल को कारण माना गया है ग्रन्थ समाप्ति के लिये नहीं ।

'काशिकाकार, ने कहा है--एतेन समाप्तिं प्रति मङ्गलं न कारणमन्यथासिद्धत्वात्, किं तु 'विघ्नध्वंसं' प्रति, समाप्तिस्तु स्वसामग्रीत' इत्यादिबोधितमित्यन्यत्र विस्तरः ।

उद्धृत इति। अत्र 'अस्माभिः' इति शेषः। "भाष्याब्धेः शब्दकौस्तुभ उद्धृतः" इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलस्यास्य ग्रन्थस्याधुकनिकोत्प्रेक्षितासारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः। 'तत्र निर्णीतः' इत्युक्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥१॥

[ अथ धात्वर्थनिर्णयः ]

प्रतिज्ञातमाह—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥२॥

धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः ॥

---

मङ्गल का दूसरा प्रयोजन बताया है—शिष्यशिक्षार्थम्। 'मेरे शिष्य भी मङ्गल करें। इसके लिये भी मङ्गल करना आवश्यक है अन्यथा यदि ग्रन्थ के आदि में मङ्गल न रहेगा तो शिष्य ऐसा सोच सकते हैं कि जब ग्रन्थकार ने मङ्गल नहीं किया है तो मुझे क्या आवश्यकता है ?

[सा०]—श्लोक में 'उद्धृतः' से 'अस्माभिः' ऐसा कर्त्ता का अध्याहार कर 'अस्माभिः उद्धृतः' ऐसा अर्थ समझना चाहिये। महाभाष्यरूपी समुद्र से 'शब्दकौस्तुभ' निकाला गया है—यह कथन इसलिये है कि 'शब्दकौस्तुभ' में वर्णित अर्थों को कोई आधुनिकों की कपोलकल्पना न समझ ले। अन्यथा यदि 'शब्दकौस्तुभ' आधुनिकों की कपोलकल्पना हुआ तो 'शब्दकौस्तुभ' मूलक इस 'वैयाकरणभूषणसार' पर आधुनिकों की कल्पना की आपत्ति होगी जिससे यह ग्रन्थ पाणिनीयसम्प्रदाय वालों के लिये अनुपयोगी हो जायगा।

'तत्र निर्णीतः' अर्थात् 'शब्दकौस्तुभ' में निर्णीत अर्थों का संक्षेप में यहाँ वर्णन किया गया है—यह कथन इसलिये है कि इससे अधिक जानने की इच्छा वालों को शब्दकौस्तुभ देखना चाहिये।

[महाभाष्यरूपी समुद्र से 'शब्दकौस्तुभ' निकाला गया है—इस कथन से ग्रन्थकार ने अपने को विष्णु के समान सूचित किया है। ]

[सा०]—फल और व्यापार अर्थ में धातु की तथा आश्रय (फलाश्रय, व्यापाराश्रय) में तिङ्पद की शक्ति होती है। फल और व्यापार में व्यापार प्रधान होता है, तथा तिङर्थ कर्त्ता कर्म आदि धात्वर्थ व्यापार में विशेषण होता है।

विशेष--यहाँ यह बात ध्यान देने योग्य है कि 'पचति' इस तिङन्त पद के दो भाग है--( १ ) पच् ( २ ) ति। इसमें पहला भाग धातु है और दूसरा भाग प्रत्यय। उसमें धातु का कितना अर्थ है? प्रत्यय का क्या अर्थ है? तथा इन पदार्थों के परस्पर अन्वय में कौन प्रधान है, कौन अप्रधान है—इत्यादि प्रश्नों का उत्तर उक्त कारिका में दिया गया है। प्रकृति प्रत्यय तथा उनके अर्थों को इस प्रकार समझना चाहिये—




प्रकृत कारिका से निम्नाङ्कित तथ्य प्रकाश में आते हैं—

( १ ) धातु, फल और व्यापार—इन दोनों अर्थों का वाचक होता है।

( २ ) तिङ्, फलाश्रय ( कर्म ), व्यापाराश्रय ( कर्त्ता ) के वाचक होते हैं। अर्थात् 'पचति' इस कर्तृप्रत्यय स्थल में तिङ् का अर्थ 'कर्त्ता' और 'पच्यते' इस कर्मप्रत्यय स्थल में तिङ् का अर्थ कर्म है।

( ३ ) यद्यपि फल और व्यापार, ये दोनों ही धातु के अर्थ हैं, तथापि फल की अपेक्षा व्यापार अंश प्रधान होता है, क्योंकि फल व्यापार से जन्य होता है।

( ४ ) तिङर्थ=कर्त्ता, कर्म, संख्या, काल-ये धात्वर्थ व्यापार में विशेषण होते हैं।

( ५ ) यहाँ फलव्यापारयोः' इस द्विवचन निर्देश से धातु पद की फल और व्यापार में पृथक्, पृथक् अर्थात् खण्डशः शक्ति सूचित होती है। जैसे—एक गुच्छे में आम्र आदि दो प्रकार के फल हो। इसलिये कहीं फलांश और कहीं व्यापार अंश का त्याग सम्भव है। ग्रन्थकार प्राचीन तार्किकों की भाँति 'फलविशिष्ट व्यापार' में एक शक्ति नहीं मानते हैं। अन्यथा फल के पदार्थैकदेश होने से उसमें द्वितीया आदि पदार्थान्तरों का अन्वय न हो सकेगा क्योंकि नियम है--'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'।

नागोजिभट्ट भी प्राचीनतर्किकों की भाँति 'फलविशिष्ट व्यापार' में धातु की एक शक्ति मानते हैं। उनका कहना है कि धातु की फल और व्यापार अर्थ में पृथक् पृथक् शक्ति मानने पर इन दोनों अर्थों का परस्पर में उद्देश्य--विधेयभाव से अन्वय होगा न कि

विशेष्यविशेषणभाव से। क्योंकि उद्देश्य-विधेयभाव से अन्वय-बोध की प्रयोजिका पृथक उपस्थिति ही है। फल विशिष्ट व्यापार में धातु पद की एक शक्ति मानने पर उद्देश्य-विधेयभाव से अन्वय बोध की प्रयोजिका पृथक् उपस्थिति नहीं रहती है।

इसके अतिरिक्त फल और व्यापार में धातु पद की पृथक् पृथक् शक्ति मानने पर एक पद में व्युत्पत्तिद्वय की कल्पना करनी पड़ेगी, क्योंकि शाब्दबोध में कर्तृ प्रत्यय स्थल में कर्तृ प्रत्यय समभिव्याहृत धातुजन्य उपस्थिति को कारण मानना होगा तथा कर्मप्रत्यय स्थल में कर्मप्रत्ययसमभिव्याहृतधातु जन्य उपस्थिति को कारण मानना पड़ेगा। पृथक् पृथक् दो अर्थ मानने पर दो शक्ति मानना होगा तथा दो प्रकार के सम्बन्ध की कल्पना करनी होगी, यह अति गौरव होगा। परमलघुमञ्जूषा[1] में कहा है—परे तु फलव्यापारयोर्धातोः शक्तावुद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात्। पृथगुपस्थितेस्तथा अन्वयस्यौत्सर्गिकत्वात्। किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽति गौरवम्। तथा हि—फलविशेषणकव्यापारबोधे कर्तृ प्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम् धातोरर्थद्वये शक्तिद्वयकल्पनम्, धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनं चातिगौरवम्।

अन्त में नागेश ने अपना अभिमत व्यक्त करते हुये कहा है—तस्मात्[2] फलावच्छिन्ने व्यापारे, व्यापारावच्छिन्ने फले च धातूनां शक्तिः।

वस्तुतः प्राचीन वैयाकरणों के अनुसार फल और व्यापार में खण्डशः शक्ति मानना ही उचित है। विशिष्ट में धातु पद की शक्ति मानने वाले नव्यों का मत उचित नहीं है। फल और व्यापार में धातु पद की पृथक् पृथक् शक्ति मानने पर आचार्य नागेश भट्ट ने उद्देश्य-विधेयभाव से अन्वय की आशङ्का की है, क्योंकि उक्त अन्वय की प्रयोजिका पृथक् शक्ति वहाँ विद्यमान है—इसका उत्तर है कि उद्देश्यविधेयभाव से अन्वय की नियामिका व्युत्पत्ति में 'धातुभिन्नत्व' निवेश करने से उक्त दोष दूर हो जायगा, क्योंकि वैसा निवेश करने पर उक्त नियम धातु के विषय में प्रवृत्त नहीं होगा।

इसके अतिरिक्त प्राचीनों के मत में एक वृन्त (गुच्छा) में लटकते हुये दो फल की भाँति फल और व्यापार उभय अंश में एक ही खण्डशः शक्ति मानने पर शक्तिद्वय अथवा सम्बन्धद्वय की कल्पना नहीं करनी पड़ेगी। अपि तु विशिष्ट में शक्ति मानने पर फलावच्छिन्नव्यापारत्व या व्यापारावच्छिन्नफलत्व को शक्यतावच्छेदक मानने पर गौरव होगा। साथ ही नव्यों के मत में यह भी दोष होगा कि फल और व्यापार के पदार्थैकदेश होने से उसमें

---

१. परमलघुमञ्जूषा—धात्वर्थनिरूपणम्—पृ. ८९

२. परमलघुमञ्जूषा—धात्वर्थनिरूपणम् पृ. ९०

**फलं = विक्लित्त्यादि, व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया। उक्तञ्च वाक्यपदीये—**

**यावत्सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्येभिधीयते ॥ इति।**

---

कर्त्ता कर्म आदि पदार्थान्तर का अन्वय नहीं होगा। कहा है—पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन। अतः प्राचीन वैयाकरणों का ही पक्ष श्रेष्ठ है।

'स्मृताः' इस बहुवचनान्त का (धातुः) इस एकवचनान्त के साथ अन्वय सम्भव नहीं है क्योंकि विशेष्य-विशेषण में समान वचन होने का नियम है। इस आशङ्का के उत्तर में ग्रन्थकार ने कहा है कि 'स्मृताः' के स्थान पर 'स्मृतः' ऐसा एकवचनान्त की परिकल्पना कर अन्वय करना चाहिये।

यदि कोई यह कहे कि—

'वेदाः प्रमाणम्' 'जात्याकृतिव्यक्तयः पदार्थः' (न्यायसूत्रम् २।२।१८) इत्यादि में विशेष्यविशेषण में समान वचन होने का नियम व्यभिचरित है तो ऐसा नहीं कह सकते—क्योंकि जहाँ पर विशेष्यवाचक प्रकृति के उत्तरवर्त्ती विभक्ति का तात्पर्य जिस संख्या से हो, उससे भिन्न संख्या की विशेषणवाचक पद से अविवक्षा हो वहीं पर विशेषणविशेष्य में समान वचन होने का नियम है। 'वेदाः प्रमाणम्' इत्यादि में विशेष्यवाचक जो 'वेदः' पद है उसके उत्तरवर्त्ती विभक्ति तात्पर्य विषयक संख्या बहुत्व संख्या है उसके विरुद्ध एकत्व संख्या है, वह विशेषणवाचक 'प्रमाण' पदोत्तर विवक्षित है। अतः यहाँ विशेषणविशेष्य में समान वचनत्व का नियम लागू नहीं होता है। (धातुः स्मृताः) यहाँ पर विशेष्यवाचक जो धातु शब्द है उसके उत्तरवर्त्ती विभक्ति तात्पर्य संख्या एकत्व है उससे विरुद्ध जो बहुत्वसंख्या है वह विशेषणवाचक 'स्मृत' शब्द से विवक्षित नहीं है—इसलिये यहाँ दोनों में समान वचन होना आवश्यक है। उक्त विषमता को ध्यान में रखकर ही ग्रन्थकार ने समाधान किया है—धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः।

हिन्दी—ग्रन्थकार ने कारिका में कहा है—फलव्यापारयोर्धातुः। अर्थात् फल और व्यापार का वाचक धातु होता है। यहाँ फल और व्यापार शब्द से कैसा अर्थ अभिप्रेत है यह प्रदर्शन करने के लिये ग्रन्थकार ने कहा है—फलं विक्लित्त्यादि।

लोक में जिस उद्देश्य से क्रिया की जाती है उसे ही फल कहते है। स्वरितञितः (पा.सू. १।३।७२) सूत्र पर भाष्यकार ने भी यही मत व्यक्त किया है कि जिस उद्देश्य से धात्वर्थ

क्रिया में प्रवृत्ति होती है वही क्रिया का फल कहलाता है। वाक्यपदीयकार ने भी लिखा है—

यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥

अर्थात् जिस प्रयोजन की सिद्धि के लिये 'पाक' आदि क्रियायें आरम्भ की जाती है, वही उन क्रियाओं का प्रधान फल होता है। द्रव्य लाभ आदि याग क्रिया का फल नहीं है; क्योंकि उस उद्देश्य से याग क्रिया का आरम्भ नहीं किया जाता है।

जैसे—यदि स्वर्ग की कामना से याग किया जाता है तो याग क्रिया का फल स्वर्ग है। क्षुधानिवृत्ति के लिये यदि पाक क्रिया की जाती है तो 'क्षुधानिवृत्ति' ही पाकक्रिया का फल होगा। ऐसी स्थिति में भोजन पक जाने पर भी जब तक भोजन द्वारा क्षुधा की निवृत्ति नहीं होगी, 'अपाक्षीत्' प्रयोग नहीं होगा।

१. महाभाष्यम्—स्वरितञितः—(पा. सू. १।३।७२)।

इसके साथ ही उक्त प्रकार का फल मानने पर धातुओं की सकर्मकत्व अकर्मकत्व-की शास्त्रीय व्यवस्था भी न बन पायेगी।

इसलिये यहाँ 'फल' शब्द पारिभाषिक है। अतः ग्रन्थकार ने कहा है—फलं विक्लित्त्यादि।

यहाँ फल का लक्षण इस प्रकार समझना चाहिये—तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वं तद्धात्वर्थत्वं वा।

अर्थात् उस धातु के अर्थ व्यापार से जन्य हो तथा धातु से जन्य उपस्थिति का विषय हो अथवा धातु का अर्थ हो उसे फल कहते हैं। जैसे—'पच्' धातु के अर्थ व्यापार से जन्य विक्लित्ति है, वह धातु जन्य उपस्थिति का विषय है और धातु का अर्थ भी है। अतः विक्लित्ति पच् धात्वर्थ फल है। 'विक्लित्ति' कहते हैं—शिथिलीभाव को अथवा अवयवों के विशेषसंयोग विभाग को।

व्यापार—भावना[१] नामवाली साध्यरूप से कही जाने वाली क्रिया। मीमांसकों के मत में 'भावना' शब्द से जिसे कहा जाता है वही हम लोगों (वैयाकरणों) के

---

१ अभिदधाति=जनयति फलमित्यभिधा साध्यत्वेन धातुनाभिधीयत इति वाभिधा। तत्र प्रथमे 'आतश्चोपसर्गे' पा.सू. ३।१।१३६।)इति कर्त्तरि कः। द्वितीये—तेनैव सूत्रेण कर्मण्यण् प्रत्ययः तथा च भावनाभिधापदनामिका साध्यत्वेनाभिधीयमाना क्रिया व्यापार इत्यर्थः। 'भावनाभिधे'त्युक्तिस्तु व्यापारस्य धात्वर्थत्वेऽपि भावनादिनामकस्यार्थविशेषस्य आख्यातार्थत्वमेवेति भ्रमनिवारणार्था।

न च साध्यत्वेनाभिधाने मानाभावः; पचति, पाकः, करोति कृतिः—इत्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकङ्क्षयोर्दर्शनस्यैव मानत्वात्।

तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेकरूपं साध्यत्वम्। तद्रूपवत्त्वमसत्त्वभूतत्वम्। एतदेवाऽदाय

असत्वभूतो भावश्च तिङ्पदैरभिधीयते।

इति वाक्यपदीयमिति द्रष्टव्यम्।

---

मत में व्यापार है। संक्षेपतः साध्यत्वप्रकारकप्रतीतिविषय को क्रिया (व्यापार) कहते हैं। 'साध्य क्रिया' क्या है? इस प्रसङ्ग में वाक्यदीयकार ने कहा है—

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥

अर्थात् चाहे 'अपाक्षीत्' इत्यादि भूतकालिक सिद्धा क्रिया हो अथवा 'पचति' 'पक्ष्यति'—इत्यादि वर्तमान, भविष्यत् कालिक असिद्धा क्रिया हो जो साध्यरूप से कही जा रही हो जिसमें क्रम का आश्रयण हो उसे क्रिया कहते हैं।

हिन्दी—यदि कहें कि साध्यरूप से क्रिया की प्रतीति में कोई प्रमाण नहीं है तो ऐसा नहीं कह सकते हैं क्योंकि पचति और पाकः में एक ही 'पच्' धातु है, 'करोति' और 'कृतिः' में भी एक ही 'कृ' धातु है, इन तिङन्त और कृदन्त-दोनों स्थानों में धातु एक होने से धात्वर्थ समान है फिर भी पाकः या कृतिः के कहने पर वाक्यार्थ बोधके लिये 'भवति' 'अभूत्' आदि क्रियान्तर की आकांक्षा होती है जब कि 'पचति' 'करोति' आदि कहने पर अर्थबोध के लिये किसी अन्य क्रिया की आकांक्षा नहीं होती है। इस प्रकार दोनों स्थानों में समान धात्वर्थ की प्रतीति होते हुये भी एक स्थान पर क्रियान्तर की आकांक्षा होना तथा दूसरी जगह पर क्रियान्तर की आकांक्षा न होना ही साध्य क्रिया के होने में प्रमाण है।

---

१. आश्रितः=क्रमः—पौर्वापर्यं येन (रूपेण) तत्—आश्रितक्रमम्, तद्रूपं यस्याः सा आश्रितक्रमरूपा, तस्या भावस्तत्त्वात्=आश्रितक्रमरूपत्वात्। क्रिया रूपं हि—तदवयवा अधिश्रयणादयः, ते च क्रमश एवोत्पद्यन्ते। दर्पणादौ तु—क्रमशब्दमर्शं आद्यजन्तमाश्रित्य आश्रितं क्रमरूपं यस्यास्तत्त्वात् पूर्वापरीभूतावयकादित्यर्थः। तदीयाऽवयवानामधिश्रयणाद्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन सा उच्यते। यत्र च न क्रमिकावयवो व्यापारास्तत्र रूढिरेवादरणीया, पौर्वापर्यारोपो वा।

**अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः, पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात् । न च नानार्थतापत्तिः, तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात् । आख्याते क्रियैकत्वव्यवस्थाऽपि अवच्छेदकबुद्धिविशेषैक्यमादायैव । उक्तञ्च वाक्यपदीये—**

**[1]'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।**
**बुद्ध्या प्रकल्पिताऽभेदः, क्रियेति व्यपदिश्यते ॥ इति ॥**

---

साध्यत्व' का लक्षण किया है—क्रियान्तराकांक्षानुत्थापकतावच्छेदकरूपवत्त्वं साध्यत्वम् । अर्थात् जिसके कहने पर क्रियान्तर की आकांक्षा की उत्थापकता न रहे उसे साध्यक्रिया कहते हैं ।

'साध्यरूपत्व' को ही असत्त्वभूतत्व कहते हैं । इस प्रकार साध्यत्व और असत्त्वभूतत्व-ये दोनों पर्याय हैं । इसी अभिप्रायको वाक्यपदीयकार ने कहा है—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।

अर्थात् असत्त्वभूत क्रिया तिङन्तपदों से कही जाती है । निरुक्तकार ने भी इसी प्रकार के अर्थ का प्रतिपादन किया है । कहा है—भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि ।

हिन्दी—यह साध्यत्वेन प्रतीयमान व्यापार फूत्कारत्वाधःसन्तापनत्व—यत्नत्वादि तत्तद्रूप धातु वाच्य होता है; क्योंकि 'पचति' इत्यादि से फूत्कारत्वादिप्रकारक बोध अनुभव सिद्ध है ।

यदि यह कहें कि 'पचति' कहने से फूत्कारत्व अधःसन्तापनत्व आदि अनेक अर्थों की प्रतीति होती है तो धातु के नानार्थक होने की आपत्ति होगी—ऐसा कहना उचित न होगा, क्योंकि जैसे—तद्, यद् आदि के शक्य अर्थ घट, पट आदि नाना होते हैं; उन घट, पट आदि अर्थों के शक्यतावच्छेदक घटत्व-पटत्व-आदि भी नाना होते हैं; किन्तु उन शक्यतावच्छेदकों का अवच्छेदक बुद्धिविशेष एक होने से नानार्थक नहीं होते हैं । उसी प्रकार

---

१. गुणभूतः—क्रमजन्मनाम् = क्रमेण = पौर्वापर्य्येणोत्पत्तिमतां फूत्कारादिव्यापाराणां समूहो बुद्धया संकलनात्मैकत्वबुद्धया समूहालम्बनात्मिकया वा प्रकल्पितोऽभेदो यत्र समूहे स बुद्धिप्रकल्पितसमूह एव क्रिया । अभेदश्चावयवानाम् ।

धात्वर्थं निरूप्य तिङर्थमाह—

आश्रये त्विति—फलाश्रये, व्यापाराश्रये चेत्यर्थः। फलाश्रयः कर्म; व्यापाराश्रयः कर्त्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः, अन्यलभ्यत्वात्। शक्यतावच्छेदकं चाश्रयत्वं तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते।

नन्वनयोराख्यातार्थत्वे किं मानम्? प्रतीतेः—लक्षणया; आक्षे-

---

'पच्' धातु के फूत्कार-अधःसन्तापन आदि अनेक अर्थ हैं उन अर्थों का शक्यतावच्छेदक घटत्व-पटत्व आदि भी अनेक है उन शक्यतावच्छेदको का अवच्छेदक बुद्धिविशेष एक रहता है। अतः धातु नानार्थक नहीं होता है।

यदि पच्यादि धातु का फूत्कारत्वादि नाना अर्थ होते तो 'आख्यातेनैका क्रिया प्रत्यायते' यह प्रशंसायाम् (५।२।६६) सूत्रस्थ भाष्य असङ्गत हो जायगा। यहाँ 'आख्यात' का अर्थ 'धातु' है।

उक्त आशंका का उत्तर आख्यात 'धातु' में क्रिया के एकत्व की व्यवस्था अवच्छेदक के बुद्धि विशेष की एकता को लेकर की जाती है। जैसे[२]—फूत्कारत्वादि निष्ठ जो शक्यतावच्छेदकता, उसका अवच्छेदक जो बुद्धिविशेष, उस बुद्धिविशेष में रहने वाला जो एकत्व, उसका आरोप क्रिया में करके क्रिया के एकत्व की व्यवस्था की जाती है। वाक्यपदीय में कहा है—

गुणीभूत (तत्तद् रूप से भासमान) अवयवों के द्वारा क्रमशः उत्पन्न होने वाले फूत्कार आदि व्यापारों का समूह, जिसमें समूहालम्बनात्मक बुद्धि द्वारा अभेद की कल्पना की गई हो वह बुद्धिपरिकल्पित समूह ही क्रिया है।

हिन्दी—धात्वर्थ का निरूपण कर अब तिङर्थ को बताते है—आश्रये त्विति। अर्थात् आश्रय के वाचक तिङ् होते हैं। आश्रय का तात्पर्य फलाश्रय और व्यापाराश्रय से है। फलाश्रय कर्म होता है और व्यापाराश्रय कर्त्ता होता है। यतः फल और व्यापार धातु का अर्थ है। अतः इन अर्थों में तिङ् की शक्ति नहीं हो सकती है, क्योंकि शब्द का अर्थ वही होता है, जो दूसरे शब्द से लब्ध न हो।

इस प्रकार फल और व्यापार धातु के अर्थ हैं, पहले कह चुके है तथा कर्त्ता और कर्म तिङ् के अर्थ होते हैं, यह बात—'आश्रये तु तिङः स्मृताः' इस वाक्य से सूचित होता है। यहाँ आश्रय में रहने वाला शक्यतावच्छेदक आश्रयत्व तत्तद्धर्म विशेषरूप होता है—यह बात आगे सुबर्थनिर्णय में कहेंगे।

**पात्, प्रथमान्तपदाद्वा सम्भवादिति चेत्—अत्रोच्यते—'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा. सू. ३-४-६९) इति सूत्रमेव मानम्।**

---

( हिन्दी ) कर्त्ता, कर्म–तिङ के अर्थ हैं यह पहले कहा जा चुका है। उस बारे में यह पूछते हैं कि कर्ता कर्म तिङ्के अर्थ हैं इसमें क्या प्रमाण है? इसका उत्तर देते हुये ग्रन्थकार ने कहा है कि इसमें प्रतीति ही प्रमाण है, क्योंकि जब 'पच्' आदि धातुओं का तिङ् आदि, प्रत्ययों के साथ प्रयोग करते हैं तभी कर्त्ता, कर्म आदि की प्रतीति होती है, अन्यथा नहीं। इसलिये कर्त्ता, कर्म आदि आख्यात (तिङ्) के अर्थ हैं।

इसके आगे पुनः यह आशंका करते हैं कि धातु के साथ तिङ् के जुड़ने पर ही कर्त्ता, कर्म अर्थ की प्रतीति होती है—इसलिये तिङ् का अर्थ कर्त्ता, कर्म होता है—ऐसा नहीं कहा जा सकता है, क्योंकि प्रतीति तो, शब्द का वह अर्थ न रहने पर भी अन्य कारणों से भी, सम्भव है। इन कारणों को क्रमशः इस प्रकार बताया गया है—

(१) लक्षणा के द्वारा।

(२) आक्षेप के द्वारा।

(३) समीपवर्त्ती प्रथमान्त पद के द्वारा।

(१) लक्षणा जैसे–'गङ्गायां घोषः' में 'गङ्गा' पद का शक्य अर्थ धारा प्रवाह है किन्तु लक्षणा के द्वारा 'तट' अर्थ कर लिया जाता है उसी प्रकार मीमांसक रीति से तिङ्पद का शक्य अर्थ भावना मानेंगे तथा कर्त्ता कर्म अर्थ की प्रतीति लक्षणा द्वारा कर लेंगे।

(२) आक्षेप—मीमांसकों के यहाँ अर्थापत्ति प्रमाण माना जाता है।

वे कहते हैं—'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते। अर्थात् जिसके विना जो कार्य अनुपपन्न होता है उस कारण की उस कार्य से कल्पना कर ली जाती है। जैसे—पीनोऽयं देवदत्तो दिवा न भुङ्क्ते" अर्थात् यह मोटा देवदत्त दिन में भोजन नहीं करता है। यतः शरीर का हृष्ट पुष्ट या स्थूल होना विना भोजन के सम्भव नहीं है। इसलिये रात्रि भोजन की कल्पना कर ली जाती है। इसी प्रकार मीमांसकों के मत में तिङ्का अर्थ भावना है वह विना आश्रय के नहीं रह सकती है। इसलिये तिङर्थ भावना से उसके आश्रय कर्त्ता, कर्म अर्थ का लाभ आक्षेप द्वारा कर लिया जायगा। इसलिये तिङ्का अर्थ कर्त्ता, कर्म है यह नहीं कहा जा सकता है।

(३) प्रथमान्त पद—'देवदत्तः पचति' 'तण्डुलः पच्यते' इत्यादि में देवदत्त, तण्डुल आदि प्रथमान्त पदों से कर्त्ता, कर्म अर्थ की प्रतीति होती है तब उसे तिङ्का अर्थ कैसे माना जा सकता है?

विशेष—इन तीनों उपायों के प्रथम पक्ष (लक्षणा) में अरुचि का कारण यह है कि यदि तिङ्का आश्रय अर्थात् कर्त्ता, कर्म में लक्षणा करेंगे तो भावना का बोध नहीं होगा।

अत्र हि चकारात् कर्त्तरि कृत् (पा. सू. ३-४-६७) इति सूत्रोक्तं 'कर्त्तरि' इत्युनुकृष्यते। बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चाऽनेन विधीयन्ते। नकार-विसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत्।

न च सूत्रे कर्तृकर्मपदे कर्तृत्व-कर्मत्वपरे। तथा च कर्तृत्वं कृतिः, कर्मत्वञ्च फलमेवार्थोऽस्त्विति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात्।

---

यदि तिङ्पद की भावना अर्थ में शक्ति मानेंगे तो कर्त्ता, कर्म अर्थ में लक्षणा न हो सकेगी क्योंकि युगपद्वृत्तिद्वय का विरोध होता है। इसलिये एक ही समय तिङ् पद की भावना अर्थ में शक्ति तथा कर्त्ता, कर्म अर्थ में लक्षणा नहीं मानी जा सकती है।

यदि यह कहें कि तिङ् पद की भावनाश्रय में लक्षणा करेंगे जिससे भावना और उसके आश्रय कर्त्ता, कर्म दोनों का लाभ केवल लक्षणा से हो जायगा। इसलिये एक साथ दो वृत्ति के आश्रयण की आपत्ति न होगी तो इसका उत्तर यह है कि भावनाश्रय में लक्षणा करने पर भावना विशेषण होने से अप्रधान हो जायगी जब कि भावनामुख्य-विशेष्यकबोध मीमांसकों को भी अभीष्ट है।

दूसरे (आक्षेप) वाले पक्ष में अरुचि का कारण यह है कि यदि आक्षेप द्वारा कर्त्ता, कर्म अर्थ का लाभ करेंगे तो विशेषणरूप से प्रतीत होने के कारण भावना अप्रधान हो जायगी और कर्त्ता कर्म अर्थ ही प्रधान हो जायेंगे जब कि भावना प्रधानक बोध मीमांसकों का सिद्धान्त है।

नैयायिकों के अनुसार यदि आक्षेप का अर्थ अनुमान मानेंगे तो उसके लिये व्याप्ति-ज्ञान आवश्यक होगा जबकि (पचति) इत्यादि में व्याप्तिज्ञान के विना ही आश्रय का ज्ञान सभी को हो जाता है। अतः तृतीय पक्ष की उद्भावना करते हैं— प्रथमान्तात्पदाद्वा। पूर्वोक्त प्रकार के पक्ष में कर्त्ता, कर्म अर्थ की प्रतीति तो तिङ्का वाच्य अर्थ न होने पर भी लक्षणा, आक्षेप अथवा प्रथमान्त पद के द्वारा सम्भव है तिङ्का अर्थ कर्त्ता, कर्म है, इसमें क्या प्रमाण है? इस आशङ्काके उत्तर में ग्रन्थकार पाणिनि का सूत्र उद्धृत करते हैं— लः कर्मणि च भावे चाऽकर्मकेभ्यः (पा. सू. ३-४-६९) यह सूत्र ही प्रमाण है।

हिन्दी—लः कर्मणि च भावे चाऽकर्मकेभ्यः (पा. सू. ३-४-६९) इस सूत्र में चकार के द्वारा कर्त्तरि कृत् (पा सू. ३-४-६७) सूत्र 'कर्त्तरि' पद की अनुवृत्ति आती है जिससे अर्थ होता है—लकार सकर्मक धातु से कर्त्ता कर्म अर्थ में होते हैं तथा अकर्मक धातु से भाव और कर्म अर्थ में होते हैं।

अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात् तत्र लकारविधिः स्यादिति चेत् ? तर्हि कृतमपि कर्तृ-कर्मादिवाचित्वं न सिद्ध्येत्, 'कर्त्तरि कृत्' इति च लः कर्मणि च इत्यनेन तुल्ययोगक्षेमम् ।

अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचित्वमस्तु; भावनाया एवाक्षेपेण कृदादिवत् प्रतीतिसम्भवे वाच्यत्वं मास्तु । तथा सति प्राधान्यं तस्या न स्यादिति चेन्न, घटमानयेत्यादावाक्षिप्तव्यक्ते-रपि प्राधान्यवदुपपत्तेः ।

---

सावित्री

यद्यपि लोक में वोध लकार से नहीं होता है अपितु 'पचति' इत्यादि के तिवादि से होता है तथापि स्थानी रूप से कल्पित लकार 'ल. कर्मणि०' (३-४-६९) इस सूत्र से कर्त्ता, कर्म अर्थ में विधान किये जाते हैं । जैसे—रामान् , रामैः के नकार, विसर्ग आदि में रहने वाली कर्म, करण आदि वोधकता शक्ति को लेकर शस् भिस् आदि का विधान किया जाता है उसी प्रकार 'पचति' इत्यादि के तिवादि में रहने वाली कर्त्ता, कर्म आदि शक्ति को लेकर उन्हीं अर्थों में लकारों का विधान किया गया है ।

यदि यह कहें कि 'लः कर्मणि' इस सूत्र में स्थित कर्तृ-कर्म पद कर्त्ता और कर्म परक नहीं है अपितु कर्तृत्व कर्मत्व परक है । कर्तृत्व का अर्थ 'कृति' अर्थात् व्यापार है तथा कर्मत्व का अर्थ फल है ऐसी स्थिति में कर्त्ता, कर्म आख्यात ( तिङ् ) का अर्थ है यह कैसे माना जा सकता है ?

उक्त शंका इसलिये उचित नहीं है कि जब फल और व्यापार, धातु के अर्थ होते हैं यह पहले कहा जा चुका है तव उन्हीं अर्थों में लकार विधान की कल्पना कैसे की जा सकती है क्योंकि नियम है—'अनन्यलभ्यो हि शब्दार्थः । अर्थात् शब्द का अर्थ वह होता है जो अन्य से लभ्य न हो ।

अच्छा, दर्शनान्तरीय अर्थात् मीमांसकों की रीति से व्यापार के धात्वर्थ न होने से उस (व्यापार) अर्थ में लकार माना जाय तो कोई आपत्ति न होगी क्योंकि मीमांसक लोग फलमात्र धात्वर्थ मानते हैं । इसका उत्तर देते हुये ग्रन्थकार का कहना है कि यदि तिङन्त स्थल में व्यापार अर्थ में लकार मानेंगे तो कृत्प्रत्ययों की भी कर्तृ-कर्म-आदि की वाचकता सिद्ध न हो सकेगी क्योंकि 'कर्त्तरि कृत्' इस सूत्र से 'लः कर्मणि' इस सूत्र में अनु-वृत्त 'कर्त्तरि' पद का दोनों स्थानों पर समान अर्थ करना ही उचित होगा । यदि 'लः कर्मणि' इस सूत्र में 'कर्त्तरि' पद का कर्तृत्व अर्थात् व्यापार अर्थ है तो 'कर्त्तरि कृत्' इस

**पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेन्न; पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाऽविशेषात्।**

**न च कर्त्तुर्विवरणं तात्पर्यार्थविवरणम्, पाकं करोतीत्यशब्दार्थकर्मत्वविवरणवद्, इतरेतरयोगद्वन्द्वे समुच्चयांशविवरणवद् वा न तदर्थनिर्णायकमिति वाच्यम्, भावनायामपि तुल्यत्वात्।**

---

सावित्री

सूत्र में भी 'कर्त्तरि' पद का व्यापार अर्थ मानना होगा। ऐसा मानने पर कृत्प्रत्ययों की भी कर्तृ, कर्मादि वाचकता सिद्ध न हो सकेगी। इस प्रकार मीमांसकों का भी अभीष्ट सिद्ध न हो सकेगा जब कि मीमांसक भी कृत्प्रत्ययों का कर्त्ता कर्म आदि अर्थ मानते हैं।

इसके साथ ही मीमांसकों को चाहिये कि वे कृत्प्रत्ययों की भाँति आख्यात (तिङ्) को भी कर्त्ता का वाचक मान लें और जैसे कृत्प्रत्यय स्थल में भावना की आक्षेप से प्रतीति करते हैं वैसे ही तिङन्त स्थल में भी आक्षेप से ही भावना की प्रतीति करें। तिङ् का वाच्य अर्थ भावना न मानें। (तिङ् का वाच्य अर्थ कर्त्ता, कर्म ही माने)।

यदि मीमांसक यह कहें कि भावना का आक्षेप से लाभ मानने पर उसकी प्रधानता न रह जायगी ऐसा नहीं कह सकते है क्योंकि मीमांसक जाति में शक्ति मानते हैं और उससे आक्षिप्त व्यक्ति में क्रिया की प्रवृत्ति होती है। 'घटमानय' इस वाक्य में घटत्व-जाति सें आक्षिप्त घटव्यक्ति को प्रधान मानकर आनयन क्रिया करते हैं क्योंकि घटत्व जाति के अमूर्त्त होने से उसका आनयन सम्भव नहीं है। इस प्रकार हम देखते हैं कि मीमांसक लोग जाति से आक्षिप्त व्यक्ति की प्रधानता मानते हैं तब तिङर्थ कर्त्ता से आक्षिप्त भावना की प्रधानता में कैसे सन्देह कर सकते हैं।

यदि मीमांसक यह कहें कि 'पचति' को 'पाकं करोति' ऐसा विवरण देखा जाता है। 'पच्' धातु का अर्थ 'पाक' रूप फल है, 'त' का विवरण 'करोति' है। 'करोति' का भावना अर्थ सभी को मान्य है। इस प्रकार के विवरण से आख्यात का भावना अर्थ मानना उचित है।

इसके उत्तर में वैयाकरणों का कहना है कि जैसे—'पचति' का 'पाकं करोति' यह भावना प्रधान विवरण किया जाता है वैसे ही 'पाकानुकूलव्यापारवान् कर्त्ता' ऐसा कर्तृ-प्रधान विवरण भी देखा जाता है। ऐसी स्थिति में कोई ऐसा कारण नहीं है भावना प्रधान विवरण देख कर तिङ्का भावना अर्थ माना जाय और कर्तृप्रधान विवरण देखकर कर्त्ता अर्थ न माना जाय।

किञ्च पचति देवदत्तः इत्यत्राऽभेदान्वयदर्शनात् तदनुरोधेन कर्त्तुर्वाच्यत्वमावश्यकम् पक्ता देवदत्तः इतिवत् । न चाऽभेदबोधे समानविभक्तिकत्वं नियामकम्, तच्चात्र नास्तीति वाच्यम्, सोमेन यजेत स्तोकं पचति राजपुरुषः इत्यादावप्यभेदबोधाऽनापत्तेः ।

---

सावित्री

यदि यह कहें कि कर्त्ता का विवरण तो शब्दानुसारी विवरण नहीं है अपि तु तात्पर्यार्थ विवरण है । जैसे—'पचति' के 'पाकं करोति' विवरण में 'पच्' का अर्थ पाक रूप फल; 'ति' का अर्थ करोति' है पर 'पाकम्' में 'अम्' विभक्ति से अभिहित कर्मत्व किसी का अर्थ न होते हुये भी विवरण होता है, 'रामकृष्णौ' इस इतरेतरयोग द्वन्द्व का विवरण किया जाता है—रामश्च कृष्णश्चेति । यहाँ दो चकारों का समुच्चय किसी शब्द का अर्थ नहीं है फिर भी विवरण द्वारा बोध किया जाता है । इस प्रकार विवरण द्वारा जिसका बोध किया जाता है वह वहाँ शब्द का वाच्य अर्थ नहीं माना जा सकता है । इसलिये विवरण देखकर आख्यात का कर्त्ता अर्थ मानना उचित नहीं है ।

इस पर वैयाकरणों का कहना है कि यदि विवरण देखकर आख्यात का कर्त्ता अर्थ नहीं माना जा सकता है तो विवरण से आख्यात का भावना अर्थ भी नहीं माना नहीं जा सकता है । यदि आप ( मीमांसक ) कर्त्ता का विवरण तात्पर्यार्थ विवरण मानते हैं तो हम भावना का विवरण तात्पर्यार्थ विवरण मान सकते हैं ।

इसके अतिरिक्त 'तिङ्' का अर्थ कर्त्ता है—इसमें यह भी यह भी कारण है कि जैसे "पक्ता देवदत्तः" इत्यादि के दोनों पदों में अभेदान्वय देखने से तृच् प्रत्यय का अर्थ कर्त्ता होता है वैसे 'पचति देवदत्तः' इन दोनों पदों में भी अभेदान्वय होने से तिङ् का अर्थ कर्त्ता मानना चाहिये ।

यदि आप ( मीमांसक ) कहें कि 'पक्ता देवदत्तः' इत्यादि पदों के अभेदान्वय बोध में समानविभक्ति होना नियामक है ( दोनों पदों में प्रथमा एक वचन की 'सु' विभक्ति है ) 'पचति देवदत्तः' में समान विभक्ति नहीं है । इसलिये यहाँ अभेद नहीं होगा । 'समान विभक्ति' का अर्थ समान आनुपूर्वी होना है । यहाँ 'देवदत्त' पद के उत्तर 'सु' विभक्ति है एवं 'पच्' धातु के उत्तर 'ति' विभक्ति होने से दोनों की आनुपूर्वी भिन्न है ।

इसके उत्तर में वैयाकरणों का कहना है कि यदि अभेद बोध में समान आनुपूर्वी को नियामक मानेंगे तो 'सोमेन यजेत' 'स्तोकं पचति' 'राजपुरुषः', इत्यादि में भी अभेदान्वय बोध न हो सकेगा क्यों कि यहाँ भी समान आनुपूर्वी नहीं है जब कि इन स्थलों पर आप मीमांसक लोग अभेदान्वय मानते हैं ।

